श्रीः ।

# स्तोत्ररत्नावलि-

प्रथमभागः ।

खेमराज श्रीकृष्णदास

इत्यनेन

मुम्बय्यां

स्वकीये "श्रीवेंकटेश्वराख्य" मुद्रणालये

मुद्रितः ।

संवत् १९५० शके १८१५

श्रीः ।

श्रीर्जयति । श्रीमदनंतनिगमांतसिद्धांतपरमतत्त्वार्थानन्तकल्याणगुणाकरश्रीमन्नारायणस्वरूपस्वभावप्रकाशिकायांदर्शनस्पर्शनलेखनपठनप्रदानादानरक्षणपूजनश्रवणादिभिः सकलभगवद्भक्तवैष्णवानां कलिकलुषांधकारनिर्हरणप्रचंडभास्करद्युतौ श्रीमत्पूर्वाचार्य्यप्रणीतस्तोत्ररत्नावल्यामध्येतृजनानां झटित्यखिलपुरुषार्थप्रदत्वेन वृत्तालंकारादिभिश्चात्यंतसुंदरोयंप्रथमोभागः सेतुसीताचलान्तर्धरणीमध्यवर्त्तिनामास्तिकमतावलम्बिसकलसज्जनानामत्यन्तोपकारायश्रीमद्वेदमार्ग्गप्रतिष्ठापनाचार्योभयवेदान्तप्रवर्तकाचार्यकंदाढपीठस्थश्रीद्रामानुजाचार्याज्ञया तच्छिष्येण श्रीकृष्णदासात्मजेन खेमराजगुप्तेन मोहमय्याख्यपत्तने स्वीये श्रीवेंकटेश्वराख्यमुद्रणालये मुद्रितः

श्रीवेंकटेश्वरायनमः

७४।। खेमराज श्रीकृष्णदास

श्रीवेंकटेश्वरछापखाना, (मुंबई.)

# स्तोत्ररत्नावलिप्रथमभागस्तोत्रानुक्रमणिका

श्रीः ।

# स्तोत्ररत्नावलिः ।



## यतिराजस्तोत्रम् ।

श्रीमते रामानुजाय नमः ॥ श्रीरंगेशजया श्रयकेतुः श्रितजनसंरक्षणजीवातुः ॥ भवभ यजलधेरेष हि सेतुः पद्मानेतुः प्रणतौ हेतुः॥ भज यतिराजं भज यतिराजं भज यतिराजं भवभीरो ॥ १ ॥ आदौ जगदाधारः शेषस्त दनु सुमित्रानंदनवेषः ॥ तदुपरि धृतहलमुस लविशेषस्तदनंतरमभवद्गुरुरेषः॥ भज यति० ॥ २ ॥ भुंक्ते वैषयिकं सुखमन्यः प्रचकास्त्ये वानश्नन्न्यः ॥ इति यस्तत्त्वं प्राह वदान्यस्त स्मादधिकः को नु वदान्यः ॥ भज यति० ३॥

नष्टे नयने कस्यालोकश्चित्ते मत्ते कस्य विवेकः ॥ क्षीणे पुण्ये कस्सुरलोकः कामे धूते क्स्तव शोकः ॥ भज यति० ॥ ४ ॥ निशि वनितासुखनिद्रालोलः प्रातः परदूषणपटुशीलः ॥ अंतर्याति निजायुष्कालः किं जानाति नरः पशुलीलः ॥ भज यति० ॥ ५ ॥ केचिल्लीलालालसगतयः केचिद्बालालालितरतयः ॥ केचिद्दोलायितहतमतयः केपि न संत्यर्चितयतिपतयः ॥ भज यति० ॥ ६ ॥ यावानबलो जरया देहस्तावान्प्रबलोविषये मोहः ॥ वचसि विरक्तिः श्रुतिपरिवाहो मनसि हितस्त्वपरोपि विवाहः ॥ भज यति० ॥ ७ ॥ कलुषनिकायं ललनाकायं पश्यन्मुह्यसि सायं सायम् ॥ जहि जहि हेयं तद्व्यवसायं स्मर निरपायं चिरमोपायम् ॥ भज यति० ॥ ८ ॥ रात्रिन्दिवमपि

भिक्षाचर्या कलहायैवागच्छति भार्या॥मध्ये बांधवसेवा कार्या कथय कदा तव देवसपर्या ॥ भज यति० ॥९॥अन्धं नयनं भूमौ शयनं मन्दं वचनं मलिनं वदनम् ॥ तस्मिन्काले गोप्तुं सदनं वांछसि दत्ततनूजानयनम्॥भज यति० ॥१०॥तालच्छदकृतकुञ्जकुटीरः प्रतिगृहसन्ध्याकवलाहारः॥ विविधपटच्चरभारक्रूरस्सोऽपि विधात्रसमाहंकारः ॥ भज य० ॥ ११ ॥ मंत्रद्रव्यविशुद्धो यागस्सर्वारंभविरागस्त्यागः॥कर्तुं शक्यो न कलौ योगः किं तु यतीशगुणामृतभोगः ॥ भज यति०॥१२ उपरि महोपलवर्षासारो मार्गे कंटककर्दमपूरः॥ कक्षे भारश्शिरसि किशोरस्सुखयति घोरःकं संसारः॥ भज यति० ॥ १३ ॥ भजसि वृथा विषयेषु दुराशां विविधविचित्रमनो

रथपाशां॥ कियदपि लभसे न हि तत्रैकं किंतु व्रजसि महान्तं शोकम् ॥ भज यति० ॥ १४॥ कश्चन लोके करपुटपात्रः पातुं सुतमाश्रितमठसत्रः॥ तस्मिन्वृद्धे तं सकलत्रः शपति हि रण्डासुतइति पुत्रः॥ भज यति० ॥ १५॥ मनुजपतिं वा दिगधिपतिं वा जलजभवं वा जगदधिकं वा ॥ ममताहङ्कृतिमलिनो लोको निन्दति निन्दति निन्दत्येव ॥ भज यति० ॥ ॥ १६ ॥ पापहतो वा पुण्ययुतो वा सुरनरतिर्यग्जातिभवो वा ॥ रामानुजपदतीर्थान्मुक्तिं विन्दति विन्दति विन्दत्येव ॥ भज यति० ॥ ॥ १७ ॥ गुणगुणिनोर्भेदः किल नित्यश्चिदचिद्द्वयपरभेदस्सत्यः। तद्द्वयदेहो हरिरिति तत्त्वं पश्य विशिष्टाद्वैतं तत्त्वम्॥ भज यति० ॥ ॥ १८ ॥ यतिपतिपदजलकणिकासेकश्चतुर

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



क्षरपदयुग्मविवेकः ॥ यस्य तु सालनगर्यैव लोकस्तस्य पदेन हतो यमलोकः ॥ भज यति० ॥ १९ ॥ चिन्तय सर्वं चिदचिद्रूपं तनुरिति तस्य हरेरनुरूपम् ॥ कस्मात्तस्मिन्कलयसि कोपं पश्चाद्व्रजसि दुरापं तापम्॥ भज यति०॥ २० ॥यश्चतुरक्षरमंत्ररहस्यं वेद तमेव वृणीहि सदस्यम् ॥तच्चरणद्वयदास्यमुपास्यं तद्विपरीतं मतमपहास्यम्॥भज यति०॥२१॥वैष्णवकुलगुणदूषणचिन्तां मा कुरु निजकुलशीलाहन्ताम्॥यतिपतिरेव हि गुरुरेतेषामिति जानीहि महत्त्वं तेषाम् ॥ भज यति० ॥२२॥ विद्यानिपुणा वयमित्यन्ये हृद्या धनिनो वयमित्यन्ये॥सत्कुलजाता वयमित्यन्ये तेषु कलिं परिपूर्णं मन्ये॥ भज य० ॥ २३ ॥यमकिंकरकरमूले शूले पतदभिया

तिं हि फाले फाले॥ दहति तनुं प्रतिकूले का
ले कं रमयसि तत्काले बाले ॥ भज यति० ॥
॥ २४ ॥ सुमसुकुमारं शोभितमारं रतिसुख
सारं युवतिशरीरम् ॥ गतजीवितमतिघोरवि
कारं दृष्ट्वा गच्छसि दूरं दूरम् ॥ भज यति० ॥
॥ २५ ॥ नरवाहनगजतुरगारूढा नारीसुत
पोषणगुणगूढाः॥ नानारञ्जकविद्याप्रौढा ना
गरिकाः किं यतयो मूढाः ॥ भज य० ॥ २६ ॥
यस्य मुखस्था यतिपतिसूक्तिस्तस्य करस्था
विलसति मुक्तिः॥ नरके पतितं नवनवयुक्ति
र्न हि रक्षति सामान्यनिरुक्तिः ॥ भज यति०
॥ २७ ॥ श्रुतिशिरसामत्यन्तविदूष्यं सूत्रान
भिमतमतिवैदूष्यम्॥ प्रथममममङ्गलमनृत
विशेष्यं प्रलपसि किं प्राकृतकृतभाष्यम् ॥
भज यति० ॥ २८ ॥ तस्करजारविदूषकधूर्ता

मस्करिमौनिदिगंबरवृत्ताः ॥ गुप्तघनीकृतध
नमदमत्ता गुरवः किं परवंचकचित्ताः ॥ भज
य० ॥ २९ ॥ कान्तिमतीसुकुमारकुमारं केश
वसिंहकिशोरमुदारम् ॥ रामानुजमहिराडव
तारं मूकांधानपि मोक्षयितारम् ॥ भज यति०
॥ ३० ॥ काषायांबरकवचितगात्रं कलितक
मण्डलुदण्डपवित्रम् ॥ विधृतशिखाहरिणा
जिनसूत्रं व्याख्यातद्वैपायनसूत्रम् ॥ भज य
ति० ॥ ३१ ॥ यामुनपूर्णकृपोज्ज्वलगात्रं रा
माब्जाक्षमुनीक्षणपात्रम् ॥ कोमलशठरिपुप
दयुगमात्रं श्रीमाधवसेनापतिमित्रम् ॥ भज
यति० ॥ ३२ ॥ सालग्रामे सर्वहितार्थं येना
स्थापि गुरोःपदतीर्थम् ॥ तत्कुलदैवतहितपु
रुषार्थं सकलोपायाधिकचरमार्थम् ॥ भज य
ति० ॥ ३३ ॥ प्रवचनशक्तः प्रज्ञायुक्तःपरहित

शक्तः परमविरक्तः ॥नानादैवतभक्त्या युक्तो न भवति मुक्तो न भवति मुक्तः ॥भज यति० ॥ ३४॥ संत्यज सकलमुपायाचरणं व्रज रामानुजचरणौ शरणम् ॥ पश्यसि तमसःपारं नित्यं सत्यं सत्यं पुनरपि सत्यम् ॥ भज यति० ॥ ३५ ॥ भगवद्रामानुजषट्त्रिंशस्साल ग्रामगुरूत्तमवंश्यः॥ कौंडिण्यः कविराह पवित्रं रङ्गार्यो यतिराजस्तोत्रम् ॥भजयतिराजं भज यतिराजं भज यतिराजं भवभीरो ॥ ॥ ३६ ॥ इतियतिराजस्तोत्रं समाप्तम्॥ १॥

## द्वितीयंयतिराजस्तोत्रम्.

श्रीमते रामानुजाय नमः ॥ धनं यस्य सद्ब्रह्म विद्यानिदानं बुधानंदरूपं स्वरूपं दधानम् ॥ परप्रापकांघ्रिद्वयीसन्निधानं विधानं

विभूतिद्वयेशाभिधानम् ॥ भजे भाष्यकारं भजे लक्ष्मणार्यं भजे सालसद्ग्रामरामानुजार्यम् ॥ १॥ नमो नित्यदिव्यप्रबंधादिकृद्भ्यो नमः पांचरात्रादिविद्भ्यो मुनिभ्यः ॥ नमो मद्गुरुभ्यो नमस्तद्गुरुभ्यो नमः पञ्चसंस्कारविद्यागुरुभ्यः ॥ भजे भाष्य० ॥ २ ॥ नमो वेंकटाधीशसत्पादरेणुस्तवैः पद्यविद्यासहस्रप्रयोक्त्रे ॥ मुमुक्षूञ्जनान्नित्यकल्पान्विधात्रे महाहोबलाचार्यवर्याय पित्रे ॥ भजे भाष्य० ॥ ॥ ३ ॥ अहिर्बुध्न्यइत्यादि यस्मिन्प्रमाणं कलौ कश्चिदित्यादि शुद्धं पुराणम् ॥ मृषाघोषवादादि येनाधरीणं धुरीणं गुरूणां पुमांसं पुराणम् ॥ भजे भाष्य० ॥ ४ ॥ यतीशाश्रितानां कनिष्ठो भवेयं सदा पंचमोपायनिष्ठो भवेयम् ॥ गुरोरङ्घ्रिरूपो भवेयं भवेयं हरेरन्तरंगो

भवेयं भवेयम् ॥ भजे भाष्यका० ॥ ५ ॥ अनंतो हि भूत्वा महाभाष्यकारः प्रबुद्धं चकार त्रयीशब्दजालम् ॥ पुनस्सोयमागत्य मद्भाष्यकारः प्रबुद्धं चकार श्रुतेरर्थमूलम् ॥ भजे भाष्य० ॥ ६ ॥ मृषवादिदुर्वारपङ्के निमग्नं गुणाभावहेयस्वरूपादिभग्नम् ॥ परं ब्रह्म यस्य प्रभावेन लग्नं बभौ दृष्टकल्याणलक्ष्मीवलग्नम् ॥ भजे भाष्य० ॥ ७ ॥ सदेकांतिभिर्द्वादशोद्यत्सहस्त्रैश्चतुःसप्ततिस्वीयसिंहासनस्थैः ॥ तथा विष्णुभक्तैरनन्तैरुपेतं महारङ्गराजाङ्गरक्षाविनीतम् ॥ भजे भाष्य० ॥ ८ ॥ न यागो न योगो न वा तन्त्रमन्त्रो न हि ज्ञानदाने न भक्तिप्रपत्ती ॥ तथाप्यात्मलब्धौ न सन्देहगन्धो बलम्मे महद्भाष्यकारानुबन्धः ॥ भजे भाष्य० ॥ ९ ॥ कृतं वा तपोन्यद्बलं वा गु

रूणां श्रियःश्रीपतेः किन्नु साक्षादपेक्षा ॥ घृ
णा भाष्यकारस्य निष्कारणा वा ममैषा मु
खे घोषते कापि भाषा॥भजे भाष्य० ॥१०॥
परव्यूहलीलान्तरार्चाविशेषैरशेषैर्हरिर्व्यास
मन्वादिवेषैः ॥ समुद्धर्तुमेतान्भवाब्धेरशक्त
स्ततोभूद्यतिःशेषभावानुषक्तः ॥ भजे भाष्य
का० ॥ ११ ॥ भवाब्धौ निमग्नान्समुद्धर्तुंका
मःपरो लक्ष्मणार्याद्गुरुर्नेति नेति ॥सनिस्सा
णभेरीमहाकाहलीभिर्भटैर्घुष्यतां घुष्यतां
दिक्तटेषु ॥ भजे भाष्य० ॥ १२ ॥ सतीब्रह्म
विद्या सुतः शैलदीपो गुरुः पारिजातश्श्रितं
भाग्यरत्नम् ॥ ततः कालमेघे स्वयं भोगिरा
जे प्रसन्ने तदस्मिन्नलभ्यं कुतो नः ॥भजे भा
ष्य० ॥ १३ ॥ तृणीकृत्य वैरिंचिरुद्रप्रतिष्ठां
यदीयांघ्रिपाथोजकैंकर्यनिष्ठाम् ॥ इहामुत्रच

प्राभवाः प्रक्रमंते तदन्यं गुरुं मूढभावा भज
न्ते ॥ भजे भाष्य० ॥ १४ ॥ यतीन्द्रं विनिंदं
त्यसद्ग्रन्थकन्था धराविश्वमिथ्यानुसन्धान
गन्धाः॥ जगच्चक्षुषं प्रत्तमेकं शतान्धा न पश्यं
त्यहो कर्मबन्धा दिवान्धाः ॥ भजे भाष्ये०॥
॥ १५ ॥ न तर्केप्युदर्कों न शब्दे च शक्तो न
कस्यावतारो न तन्त्रस्वतन्त्रः॥ कथं कल्पये
त्सर्वभाषासु गाथाः किमाचार्यमाहात्म्यभी
तरुसवेधाः ॥ भजे भाष्य० ॥ १६ ॥ अहं तू
र्ध्वबाहुर्भणामि शृणुध्वं शठारातिनाथादिवा
चः स्मरध्वं ॥ यतींद्रांघ्रिकैंकर्यमात्रे यतध्वं
मनुध्वं मुरध्वंसिलोके रमध्वम्॥ भजे भा०॥
॥ १७ ॥ सुधापुंड्रेखाविराजल्ललाटं सुधांशु
प्रतीकाशकाशत्किरीटम् ॥ समुद्घाट्य वैकुंठ
कक्ष्याकवाटं सुपर्णादिसंसेव्यमानंदकूटम्॥

भजे भाष्य० ॥ १८ ॥ उषस्सांध्यरागारुण
न्मेघरेखाकचाकर्षिकाषायखण्डोत्तरीयम् ॥
बृहन्नारदीयोक्तरूपं तुरीयं परं वस्तु पश्या
मि लक्ष्मीधरीयम् ॥ भजे भाष्यका० ॥ १९
अलं देशिकैरन्यचित्तैः प्रमत्तैरलं स्थाणुक
ल्पैरलक्ष्मीशतल्पैः ॥ अपद्माक्षहारैरचक्राङ्क
धारैरसद्भाष्यकारैरशेषावतारैः ॥ भजे भा
ष्य० ॥ २० ॥ प्रफुल्लाब्जनेत्रं प्रभाशोभिगात्रं
प्रकृत्या पवित्रं प्रभावैर्विचित्रम् ॥ हरेरातपत्रं
सतां जैत्रपत्रं सुपर्णस्य मित्रं सुमित्रासुपुत्रं॥
॥ भजे भाष्य० ॥ २१ ॥ अहो शांकराः किंक
रत्वं प्रयाताः परे भास्करास्तस्कराकारभाजः
॥ ततो यादवाःपादवारिप्रपूतास्तथैवागताः
सौगताभाट्टसांख्याः ॥ भजे भाष्य० ॥ २२ ॥
शठः कापिलः कोपिलक्ष्यो न मोक्षो विनष्टस्व

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रोऽभूत्समाहेश्वरोपि ॥ कणादः प्रमाणप्रमा
दोपि शान्तः प्रमाणं ब्रुवाणश्च गाणापतेयः॥
भजे भाष्य॰ ॥ २३॥ स्वयंब्रह्मसूत्राद्यभावेऽ
पि बुद्ध्या कथं ब्रह्मसूत्रादिभाष्यं विदध्यात्॥
कथं तस्य शिष्या बभूवुर्मनुष्याःकुतो नास्ति
शेषः कलेरेष दोषः॥ भजे भाष्य॰ ॥ २४॥
पुरा दर्शितं चोलभृत्कीटकण्ठं समारुह्य स
ह्याचलेंद्रोपकण्ठम् ॥अकुण्ठप्रभावोऽत्र वैकुं
ठकल्पं सकंठीरवं प्राप्य सोत्कंठमास्ते ॥भजे
भाष्य॰ ॥ २५ ॥नमः पुण्यकौंडिण्यगोत्रोद्भ
वेभ्यो नमस्सालसद्ग्रामसद्वंशजेभ्यः॥ न
मो वैष्णवेभ्यो महद्भ्योर्भकेभ्यो नमः शेषभा
वादचिद्भ्यश्च चिद्भ्यः॥भजे भाष्य॰ ॥ २६
॥ इति ॥श्रीसालग्रामस्थलाचार्यपुरुषनंरप
तिराजसंस्थानगुरुद्वंडवेदान्तरङ्गाचार्यविर

चितं द्वितीयं यतिराजस्तोत्रं संपूर्णम् ॥ २॥

# रामानुजवैभवस्तोत्रम्.

श्रीमते रामानुजाय नमः ॥ श्रीमन्नारायण
स्वामिन् शठकोपं प्रदेहि मे ॥ रामानुजं प्रदे
हि त्वं शठकोप मुनीश्वर ॥ १ ॥ प्रदेहि मे दा
शरथिं रामानुज दयानिधे ॥ भवाब्धौ मज्ज
मानं मां करुणाब्धे समुद्धर ॥ २ ॥ त्वमेव मे
पिता माता शरण्यश्च गुरुर्गतिः ॥ त्वां विना
ऽन्या गतिः स्वामिन्न हि कुत्रापि विद्यते॥३॥
घोरे कलियुगे ह्यस्मिन् सर्वधर्मविवर्जिते ॥
संसारतरणोपायो नान्यस्त्वच्चरणात्प्रभो ४॥
ततोऽनन्यगतिं दीनं दीनबंधो दयार्णव ॥ पा
हि मां पापिनं घोरं रामानुज जगद्गुरो ॥ ५॥
संसारतापसंदग्धः शीतहेतुविवर्जितः ॥ रा

मानुजपदांभोजच्छायाविश्राममाश्रये ॥६॥
सर्वमंगलमांगल्यं सर्वोपद्रवनाशनम् ॥ वन्दे
रामानुजार्यस्य नित्यं पादांबुजद्वयम् ॥ ७ ॥
केचित्कर्मादियोगेषु विद्वांसो निरता जनाः॥
वयं तु यतिराजस्य पादपद्मैकसंश्रयाः॥८॥
भोगैश्वर्यपराः केचित्केचित्कैवल्यमीप्सवः ॥
वयन्तु शृंखलालग्ना रामानुज दयानिधे॥९
त्वत्पादांभोजमाश्रित्य निखिलोपायवर्जि-
ताः॥तरिष्यामोऽजसा नूनं मृत्युसंसारसागर-
म्॥१०॥नमोऽस्तुसर्वार्तिविनाशहेतवे ह्यनं-
त पापेंधनदावकीलिने ॥निजाश्रितानां भव
सिंधुसेतवे यतींद्रपादांबुजकामधेनवे ॥ ११
अखिलदुरितपुंजध्वंसनं देहभाजांभवजल-
निधिपोतंपावनंपावनानां ॥ परमपुरुषधाम-
प्रापकंस्वाश्रितानां नतियतिपदपद्मं श्रेयसे

संश्रयामि ॥१२॥ नमामि रामानुजपादपंक-
जं वदामि रामानुजनाम निर्मलम्॥ स्मरामि
रामानुजदिव्यविग्रहं करोमि रामानुजदास
दासताम् ॥ १३ ॥ रामानुजस्य पदपंकज
माश्रयामि रामानुजस्य करुणामनुसंदधामि
॥ रामानुजस्य जनपादरजो वहामि रामानु
जाय नम इत्यनिशं वदामि ।१४। बौद्धांधका
रपरिहारदिवाकराय श्रीवैष्णवाम्बुनिधिपू
र्णनिशाकराय ॥ अद्वैतवादिकरियूथमृगाधि
पाय तस्मै नमोस्तु सततं यतिपुङ्गवाय।१५
लोकानुद्धर्तुकामो धृतमनुजवपुर्भूतले योव
तीर्णो निर्जित्याशेषदुष्टान् कुमतिमतपरान्वै
ष्णवं कर्म तेने।ब्रह्मेशानाद्यलभ्यं निखिलप
तिपदं दत्तवांश्चाश्रितानां श्रीमान्रामानुजो
नोभवभुजगमुखात्पातु नित्यं दयालुः।१६॥

स्वपदांबुजसंश्रितपापहरं सकलश्रुतिसार
यथार्थकरम् ॥ जयनादिविनाशनदण्डधर
म्प्रणमामि यतीश्वरमादिगुरुम् ॥ १७ ॥ प्र
कटीकृतमाधवभक्तिपथं कलिपातकमोचन
पुण्यकथम्॥परिभूतनिरीश्वरवादिमतं यति
राजगुरुं प्रणमामि सदा ॥ १८ ॥ कृमिकण्ठ
नरेशनिषूदकरम्भवरोगविनाशनवैद्यवरम् ॥
शरणागतवत्सलवारिनिधिम्प्रणमामि सदा
यतिभूमिपतिम् ॥ १९ ॥ नमोरामानुजार्याय
कल्याणगुणसिन्धवे ॥ कृपामात्रप्रसन्नाय
दीननिर्व्याजबन्धवे ॥ २० ॥ प्रथमोनन्तरू
पश्च द्वितीयो लक्ष्मणस्तथा॥तृतीयो बलरा
मश्च कलौ रामानुजो मुनिः॥२१॥द्वापरान्ते
कलेरादौ पाषंडप्रचुरे जने ॥ रामानुजेति भ
विता विष्णुधर्मप्रवर्त्तकः ॥ २२ ॥ सर्वलोक

समुद्धर्त्रे कृमिकण्ठविनाशिने ॥ नारायणप्रतिष्ठात्रे प्रपन्नसुरसाक्षिणे ॥ २३ ॥ त्रिदंडहस्तं सितयज्ञसूत्रं काषायवस्त्रं लसदूर्ध्वपुण्ड्रम् ॥ रथांगशङ्खांकितबाहुमूलं रामानुजार्यं शरणं प्रपद्ये ॥ २४॥ इति श्रीब्रह्मसंहितायां रामानुजवैभवस्तोत्रं संपूर्णम् ॥ ३ ॥ ॥

## रामानुजाष्टोत्तरशतनामावलिः

॥ श्रीमते रामानुजाय नमः ॥ रामानुजः पुष्कराक्षो यतींद्रः करुणाकरः ॥ कांतिमत्यात्मजः श्रीमाँल्लीलामानुषविग्रहः ॥ १ ॥ सर्वशास्त्रार्थतत्त्वज्ञः सर्वज्ञः सज्जनप्रियः ॥ हारीतगोत्रतिलकः श्रीभूतपुरपालकः ॥ २॥ अनघो भक्तमंदारःकेशवानंदवर्धनः ॥कांचीपूर्णप्रियसखः प्रणतार्तिविनाशकः ॥ ३ ॥पु

ण्यसंकीर्त्तनः पुण्यो ब्रह्मराक्षसमोचकः ॥ या
दवापादितापार्थवृक्षच्छेदकुठारकः ॥ ४ ॥ अ
मोघो लक्ष्मणमुनिःशारदाशोकनाशकः ॥ नि
रंतरजनाज्ञानविमोचनविचक्षणः ॥ ५ ॥ वे
दांतद्वयसारज्ञो वरदांबुप्रदायकः ॥ पराभि
प्रायतत्त्वज्ञो यामुनांगुलिमोचकः ॥ ६ ॥ देव
राजकृपालब्धषड्वाक्यार्थमहोदधिः ॥ पूर्णा
र्यलब्धसन्मंत्रः शौरिपादाब्जषट्पदः ॥ ७ ॥
त्रिदंडधारी ब्रह्मज्ञो ब्रह्मध्यानपरायणः ॥ रं
गेशकैंकर्यरतो विभूतिद्वयनायकः ॥ ८ ॥ गो
ष्ठीपूर्णकृपालब्धमंत्रराजप्रकाशकः ॥ वररं
गानुकंपात्तद्राविडाम्नायपारगः ॥ ९ ॥ मा
लांधरार्यसुज्ञातद्राविडाम्नायतत्त्वधीः ॥ चतु
स्सप्ततिशिष्याढ्यः पंचाचार्यपदाश्रयः ॥ १० ॥
प्रतीतविषतीर्थांभःप्रकटीकृतवैभवः ॥ प्रण

तार्तिहराचार्यदत्तभिक्षैकभोजनः ॥ ११ ॥
पवित्रीकृतकूरेशभागिनेयस्त्रिदंडकः ॥ कूरे
शदाशरथ्यादिचरमार्थप्रदायकः ॥ १२ ॥रं
गेशवेंकटेशादिप्रकटीकृतवैभवः ॥ देवराजा
र्चनरतो मूकमुक्तिप्रदायकः॥ १३ ॥यज्ञमूर्ति
प्रतिष्ठाता मन्नाथो धरणीधरः ॥ वरदाचार्य
सद्भक्तो यज्ञेशार्तिविनाशनः ॥ १४॥ अनंता
भीष्टफलदो विठ्ठलेशप्रपूजितः॥श्रीशैलपूर्ण
करुणालब्धरामायणार्थकः॥१५॥ प्रपत्तिध
र्मैकरतो गोविंदार्यप्रियानुजः ॥ व्याससूत्रा
र्थतत्त्वज्ञो बौधायनमतानुगः ॥ १६॥ श्रीभा
ष्यादिमहाग्रंथकारकः कलिनाशनः॥ अद्वैत
मतविच्छेत्ता विशिष्टाद्वैतपारगः ॥ १७॥ कु
रंगनगरीपूर्णमंत्ररत्नोपदेशकः ॥ विनाशि
ताखिलमतश्शेषीकृतरमापतिः। १८।पुत्रीकृ

तशठारातिश्शठजिद्दणमोचकः ॥ भाषादत्त
हयग्रीवो भाष्यकारो महायशाः ॥ १९॥पवि
त्रीकृतभूभागः कूर्मनाथप्रकाशकः ॥ श्रीवेंक
टाचलाधीशशंखचक्रप्रदायकः ॥ २० ॥ श्री
वेंकटेशश्वशुरः श्रीरमासखदेशिकः ॥ कृपा
मात्रप्रसन्नार्यो गोपिकामोक्षदायकः ॥ २१ ॥
समीचीनार्यसच्छिष्यसत्कृतो वैष्णवप्रियः ॥
कृमिकंठनृपध्वंसी सर्वमंत्रमहोदधिः ॥२२॥
अंगीकृतांध्रपूर्णार्यस्सालग्रामप्रतिष्ठितः ॥
श्रीभक्तग्रामपूर्णाढ्यविष्णुवर्धनरक्षकः२३॥
बौद्धध्वांतसहस्रांशुः शेषरूपप्रदर्शकः॥ नग
रीकृतवेदाद्रिर्दिल्लीश्वरसमर्थितः॥ २४ ॥ ना
रायणप्रतिष्ठाता संपत्पुत्रविमोचकः ॥ संप
त्कुमारजनकःसाधुलोकशिखामणिः॥२५॥
सुप्रतिष्ठितगोविंदराजः पूर्णमनोरथः॥गोद

ग्रजोदिग्विजेता गोदाभीष्टप्रपूरकः ॥ २६ ॥
सर्वसंशयविच्छेत्ता विष्णुलोकप्रदायकः ॥
अव्याहतमहद्वर्त्मा यतिराजोजगद्गुरुः ॥ २७
एवं रामानुजार्यस्य नाम्नामष्टोत्तरं शतम् ॥
यः पठेच्छृणुयाद्वापि सर्वान्कामान्समश्नुते
॥ २८॥ यद्दांध्रपूर्णेन महात्मनेदं स्तोत्रं कृतं
सर्वजनावनाय ॥ तज्जीवभूतं भुवि वैष्णवा-
नां बभूव रामानुजमानसानाम् ॥ २९॥ इति
श्रीमद्रामानुजाष्टोत्तरशतनामावलिः संपूर्णा
॥ ४॥ श्रीकृष्णार्पणमस्तु ॥ श्रीरस्तु ॥ ७ ॥

## पंचधाटी.

॥ श्रीमते रामानुजाय नमः॥ पाषंडद्रुमषंड
दावदहनश्चार्वाकशैलाशनिर्बौद्धध्वान्तनिरा
सवासरपतिर्जैनेभकंठीरवः ॥ मायावादभुजं

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



गभंगगरुडस्त्रैविद्यचूडामणिः श्रीरङ्गेशजय
ध्वजो विजयते रामानुजोयं मुनिः ॥ १ ॥ पा
षंडषंडगिरिखंडनवज्रदंडाः प्रच्छन्नबौद्धमक
रालयमंथदंडाः ॥ वेदार्थसारसुखदर्शनदीप
दंडा रामानुजस्य विलसंतु मुनेस्त्रिदंडाः २ ॥
चारित्रोद्धारदण्डं चतुरनयपथालंक्रियाकेतु
दंडं सद्विद्यादीपदंडं सकलकलिकथासंहृतेः
कालदंडम् ॥ त्रय्यंतालंबदंडं त्रिभुवनविज
यच्छत्रसौवर्णदंडं धत्ते रामानुजार्यः प्रतिक
थकशिरोवज्रदंडं त्रिदंडम् ॥ ३ ॥ त्रय्या मांग
ल्यसूत्रं त्रियुगयुगपथारोहणालंबसूत्रं सद्वि
द्यायंत्रसूत्रं सगुणनयकथासंपदां हारसूत्रम्
॥ प्रज्ञासूत्रं बुधानां प्रशमधनमनःपद्मिनी
नालसूत्रं रक्षासूत्रं यतीनां जयति यतिपतेर्व
क्षसि ब्रह्मसूत्रम् ॥ ४ ॥ पाषंडसागरमहाव

डवामुखाग्निः श्रीरंगराजचरणाम्बुजमूलदासः ॥ श्रीविष्णुलोकमणिमंडपमार्गदायी रामानुजो विजयते यतिराजराजः ॥ ५ ॥ इति श्रीपंचधाटी समाप्ता ॥ ५ ॥ श्रीरस्तु ॥ ७॥

## रामानुजस्तोत्रम्.

श्रीमते रामानुजाय नमः॥ हे रामानुज हे यतिक्षितिपते हे भाष्यकार प्रभो हे लीलानरविग्रहानघ विभो हे कांतिमत्यात्मज ॥ हे श्रीमन् प्रणतार्तिनाशनकृपामात्रप्रसन्नार्यभो हे वेदांतयुगप्रवर्तक परं जानामि न त्वां विना ॥ १ ॥ हे हारीतकुलारविंदतरणे हे पुण्यसंकीर्तन ब्रह्मज्ञानपर त्रिदंडधर हे भूतिद्वयाधीश्वर ॥ हे रंगेशनियोजक त्वरित हे गोष्ठीशशोकसंहारक स्वामिन् हे वरदांबुदाय

क परं जानामि न त्वां विना॥ २ ॥ हे श्रीभूत
पुरीश लक्ष्मणमुने हे यादवापादितापार्थाथ
द्रुमकृंतनोग्रपरशो हे भक्तमंदारक॥हे ब्रह्मा
सुरमोचनक्षम कृपाकूपार हे सज्जन प्रेष्ठामोघ
यतींद्र देशिक परं जानामि न त्वां विना ॥३
हे पूर्णार्यकृपात्तसद्दयमनो मालाधरानुग्रहा
ज्ज्ञातद्राविडवेदतत्त्वसुमते मन्नाथ पृथ्वीध
र ॥ कांचीपूर्णवरेण्यशिष्य भगवन्हे केशव
स्यात्मज श्रीपद्मेशपदाब्जषट्पद परं जाना
मि न त्वां विना॥४॥हे गोपीजनमुक्तिदानक
र हे शास्त्रार्थतत्त्वज्ञ हे गोष्ठीपूर्णकृपागृहीत
विलसन्मंत्राधिपाहस्कर ॥हेऽनंतेष्टफलप्रदा
यक गुरो हे विठ्ठलेशार्चित हे बौधायनसूत्रसं
मतपरं जानामि न त्वां विना॥५॥हे गोपाल
क हे कृपाजलनिधे हे सिंधुकन्यापते हे कंसा

तक हे गजेंद्रकरुणापारीण हे माधव॥हे रामा
नुज्ञ हे जगत्त्रयगुरो हे पुंडरीकाक्ष मां हे गो
पीजननाथ पालय परं जानामि न त्वां विना
॥६॥हे राम ३ पुरुषोत्तम ३नरहरे नारायण
३ केशव३ गोविंद३ गरुडध्वज ३ गुणनिधे
दामोदर३माधव३॥हे कृष्ण३कमलापते य
दुपते सीतापते श्रीपते हे वैकुण्ठपते चराचर
पते लक्ष्मीपते पाहि माम् ॥ ७॥ इति श्रीरा
मानुजस्तोत्रं संपूर्णम् ॥ ७॥ श्रीरस्तु ॥६॥

## नारायणाष्टकम्.

श्रीमते रामानुजाय नमः॥वात्सल्यादभय
प्रदानसमयादार्त्तार्तिनिर्व्वापणादौदार्य्यादघशोषणादगणितश्रेयःपदप्रापणात् ॥ सेव्यः श्रीपतिरेक एव जगतामेतेऽभवन्साक्षि

णः प्रह्लादश्च विभीषणश्च करिराट् पाञ्चाल्यहल्या ध्रुवः ॥ १॥ प्रह्लादास्ति यदीश्वरो वद हरिः सर्वत्र मे दर्शय स्तम्भे चैवमिति ब्रुवन्तमसुरं तत्राविरासीद्धरिः ॥ वक्षस्तस्य विदारयन्निजनखैर्वात्सल्यमापादयन्नार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ॥ २ ॥ श्रीरामाऽत्र विभीषणोऽयमनघोरक्षोभयादागतः सुग्रीवानय पालयैनमधुना पौलस्त्यमेवागतम् ॥ इत्युक्त्वाऽभयमस्य सर्वविदितं यो राघवो दत्तवानार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ३ ॥ नक्रग्रस्तपदं समुद्धृतकरं ब्रह्मादयो भोः सुराः पाल्यंतामिति दीनवाक्यकरिणं देवेष्वशक्तेषु यः ॥मा भैषीरिति यश्च नक्रहनने चक्रायुधश्रीधर आर्तत्राणपरायणः स भगवान्नाराय

णो मे गतिः॥ ४॥भोः कृष्णाच्युत भोः कृपाल
य हरे भोः पांडवानां सखे क्वासि क्वासि सुयो
धनादपहृतां भो रक्ष मामातुराम् ॥ इत्युक्तो
ऽक्षयवस्त्रसंभृततनुं योऽपालयद्द्रौपदीमार्त्त
त्राणपरायणः स भगवान्नारायणो मे गतिः॥
॥ ५ ॥यत्पादाब्जनखोदकं त्रिजगतां पापौ
घविध्वंसनं यन्नामामृतपूरकं च पिबतां संसा
रसंतारकम् ॥ पाषाणोऽपि यदङ्घ्रिपद्मरज
सा शापान्मुनेर्म्मोचित आर्तत्राणपरा० ॥६॥
पित्रा भ्रातरमुत्तमासनगतं चौत्तानपादिर्ध्रु
वो दृष्ट्वा तत्सममारुरुक्षुरधृतो मात्राऽवमानं
गतः ॥ यं गत्वा शरणं यदाप तपसा हेमाद्रि
सिंहासनमार्तत्राणपरायणः० ॥ ७॥ आर्त्ता
विषण्णाः शिथिलाश्च भीता घोरेषु च व्याधि
षु वर्त्तमानाः ॥ संकीर्त्य नारायणशब्दमात्रं

विमुक्तदुःखाः सुखिनो भवंति ॥ ८॥ इतिश्री कूरेशस्वामिविरचितं नारायणाष्टकं संपूर्णम् ॥ ८ ॥ ॥ श्रीमन्नारायणार्पणमस्तु ॥ ॥ श्रीरस्तु ॥ ॥ शुभंभवतु ॥ ७ ॥ ॥ ७ ॥

## जगन्नाथपंचकम्.

श्रीमते रामानुजाय नमः ॥ रक्तांभोरुहदर्पभंजनमहासौंदर्यनेत्रद्वयं मुक्ताहारविलंबिहेममुकुटं रत्नोज्ज्वलत्कुंडलम्॥वर्षामेघसमाननीलवपुषं ग्रैवेयहारान्वितं पार्श्वे चक्रधरं प्रसन्नवदनं नीलाद्रिनाथं भजे ॥ १ ॥ फुल्लेंदीवरलोचनं नवघनश्यामाभिरामाकृतिं विश्वेशं कमलाविलासविलसत्पादारविंदद्वयम् ॥ दैत्यारिं सकलेंदुमंडितमुखं चक्राब्जहस्तद्वयंवंदे श्रीपुरुषोत्तमं प्रतिदिनं लक्ष्मीनिवा-

सालयं॥२॥उद्यन्नीरदनीलसुंदरतनुं पूर्णेंदु-
बिंबाननंराजीवोत्पलपत्रनेत्रयुगलं कारुण्य
वारांनिधिम्॥भक्तानां सकलार्तिनाशनकरं
चिंतार्थिचिंतामणिं वंदे श्रीपुरुषोत्तमं प्रति-
दिनं नीलाद्रिचूडामणिम्॥३॥नीलाद्रौ शं-
खमध्ये शतदलकमले रत्नसिंहासनस्थं स-
र्वालंकारयुक्तं नवघनरुचिरंसंयुतंचाग्रजेन॥
भद्राया वामभागे रथचरणयुतं ब्रह्मरुद्रेंद्रवंद्यं
वेदानांसारमीशं सुजनपरिवृतं ब्रह्मदारुं स्म-
रामि ॥४॥ दोर्भ्यां शोभितलांगलं समुसलं
कादंबरीचंचलं रत्नाढ्यं वरकुंडलं भुजबलै
राक्रांतभूमंडलं ॥वज्राभामलचारुगंडयुगलं
नागेंद्रचूडोज्ज्वलं संग्रामे चपलं शशांकधव-
लं श्रीकामपालंभजे॥५॥इति श्रीजगन्नाथ
पंचकंसमाप्तम्॥९॥श्रीकृष्णार्पणमस्तु॥

 रामानुजचतुःश्लोकी ।

श्रीमते रामानुजाय नमः ॥ अनिशं भजता मनन्यभाजां चरणांभोरुहमादरेण पुंसाम् ॥ वितरसि विविधां विभूतिनिष्ठां जय रामानुज रंगधाम्नि नित्यम् ॥ १ ॥ जयिनो विमतां स्तदीयसूक्तिकुशलीभूयकुदृष्टिभिस्समेतान् ॥ शकलीकुरुषे विपश्चिदोघान् जय रामानुज० ॥ २ ॥ जय मायिमतांधकारभानो जय बाह्यप्रमुखाटवीकृशानो ॥ जय सन्मतसिंधुशीतभानो जय रा० ॥ ३ ॥ श्रुतिसम्मतसुप्रमाणतत्त्वं कृपयाऽऽलोच्य सुधासमानबुद्ध्या ॥ अकृथा वितितैकभाष्यरत्नं जय रामानुज रंगधाम्नि नित्यम् ॥ ४ ॥ श्रीकृष्णार्पणमस्तु ॥

॥ प्रणामश्लोकः ॥

श्रीमते रामानुजाय नमः ॥ अपराधसहस्रभा

जनं पतितं भीमभवार्णवोदरे ।। अगतिं शर
णागतं हरे कृपया केवलमात्मसात्कुरु ।। १ ।।
इति साष्टांगप्रणामकर्ता वदेत् ।। ।। ७ ।।

# आलवंदारस्तोत्रम्.

श्रीमते रामानुजाय नमः ।। स्वादयन्निह सर्वे
षां त्रय्यंतार्थं सुदुर्ग्रहं ॥ स्तोत्रयामास योगीं
द्रस्तं वंदे यामुनाह्वयम् ।। १ ।। नमो नमो या
मुनाय यामुनाय नमो नमः ।। नमो नमो यामु
नाय यामुनाय नमो नमः ।। २ ।। नमो यामुनपा
दाब्जरेणुभिःपावितात्मने ॥ विदिताखिलवेद्या
य गुरवे विदितात्मने ।। ३ ।। नमोचिंत्याद्भुताक्लि
ष्टज्ञानवैराग्यराशये ।। नाथाय मुनयेऽगाधभ
गवद्भक्तिसिंधवे ॥ ४ ॥ तस्मै नमो मधुजि
दंघ्रिसरोजतत्त्वज्ञानानुरागमहिमातिशयांत

सीम्ने ॥ नाथाय नाथमुनयेऽत्रपरत्र चापि
नित्यं यदीयचरणौ शरणं मदीयम् ॥ ५ ॥भू
यो नमोऽपरिमिताच्युतभक्तितत्त्वज्ञानामृता
ब्धिपरिवाहशुभैर्वचोभिः ॥ लोकेऽवतीर्णपर
मार्थसमग्रभक्तियोगाय नाथमुनये यमिनांव
राय ॥ ६ ॥तत्त्वेन यश्चिदचिदीश्वरतत्स्वभा
वभोगापवर्गतदुपायगतीरुदारः ॥ संदर्शय
न्निरमिमीत पुराणरत्नं तस्मै नमो मुनिवराय
पराशराय॥७ ॥माता पिता युवतयस्तनया
विभूतिस्सर्वं यदेव नियमेन मदन्वयानाम् ॥
आद्यस्य नःकुलपतेर्बकुलाभिरामं श्रीमत्तदं
घ्रियुगलं प्रणमामि मूर्ध्ना ॥ ८ ॥ यन्मूर्ध्नि मे
श्रुतिशिरस्सु च भाति यस्मिन्नस्मन्मनोरथप
थः सकलःसमेति ॥ स्तोष्यामि नःकुलधनं
कुलदैवतं तत्पादारविंदमरविंदविलोचनस्य

॥ ९॥ तत्त्वेन यस्य महिमार्णवशीकराणुःश
क्यो न मातुमपि शर्वपितामहाद्यैः॥ कर्तुं तदी-
यमहिमस्तुतिमुद्यताय मह्यं नमोस्तु कवये
निरपत्रपाय ॥ १०॥ यद्वा श्रमावधि यथाम-
ति वाप्यशक्तः स्तौम्येवमेव खलु तेपि सदा
स्तुवंतः॥ वेदाश्चतुर्मुखमुखाश्च महार्णवांतः
कोमज्जतोरणुकुलाचलयोर्विशेषः॥ ११॥ किं
चैष शक्त्यतिशयेन न तेऽनुकंप्यःस्तोतापितु
स्स्तुतिकृतेन परिश्रमेण॥तत्र श्रमस्तु सुल-
भो मम मंदबुद्धेरित्युद्यमोयमुचितो मम चा-
ब्जनेत्र॥१२॥नावेक्ष्यसे यदि ततो भुवनान्य-
मूनि नालं प्रभो भवितुमेव कुतःप्रवृत्तिः॥एवं
निसर्गसुहृदि त्वयि सर्वजंतोः स्वामिन्नचित्र
मिदमाश्रितवत्सलत्वं ॥१३॥ स्वाभाविकान
वधिकातिशयेशितृत्वं नारायण त्वयि न मृ-

ष्यति वैदिकः कः ॥ ब्रह्मा शिवः शतमखः परम
स्वराडित्येतेऽपि यस्य महिमार्णवविप्रुषस्ते
॥ १४ ॥ कः श्रीः श्रियः परमसत्वसमाश्रयः
कः कः पुंडरीकनयनः पुरुषोत्तमः कः ॥ कस्या
युतायुतशतैककलांशकांशे विश्वं विचित्रचि
दचित्प्रविभागवृत्तम् १५ वेदापहारगुरुपात
कदैत्यपीडाद्यापद्विमोचनमहीष्टफलप्रदानैः
॥ कोन्यः प्रजाः पशुपतिः परिपाति कस्य
पादोदकेन स शिवः स्वशिरोधृतेन ॥ १६ ॥
कस्योदरे हरविरिंचिमुखः प्रपंचः कोरक्षतीम
मजनिष्ट च कस्य नाभेः ॥ क्रांत्वा निगीर्य पु
नरुद्गिरति त्वदन्यः कः केन चैष परवानिति
शक्यशंकः ॥ १७ ॥ त्वां शीलरूपचरितैः पर
मप्रकृष्टसत्वेन सात्विकतया प्रबलैश्च शास्त्रैः
॥ प्रख्यातदैवपरमार्थविदां मतैश्च नैवासुरप्र

कृतयःप्रभवंति बोद्धुम् ॥ १८ ॥ उल्लंघितत्रि
विधसीमसमातिशायिसंभावनं तव परिव्रढि
मस्वभावं ॥ मायाबलेन भवतापि निगृह्यमा
णं पश्यंति केचिदनिशं त्वदनन्यभावाः॥१९
॥ यदंडमंडांतरगोचरं च यद्दशोत्तराण्यावर
णानि यानि च ॥ गुणाःप्रधानं पुरुषःपरं पदं
परात्परं ब्रह्म च ते विभूतयः ॥ २० ॥ वशी
वदान्यो गुणवानृजुः शुचिर्मृदुर्दयालुर्मधुरः
स्थिरः समः॥कृती कृतज्ञस्त्वमसि स्वभावतः
समस्तकल्याणगुणामृतोदधिः ॥ २१ ॥उप
र्युपर्यब्जभुवोपि पूरुषान् प्रकल्प्य ते ये शत
मित्यनुक्रमात् ॥ गिरस्त्वदेकैकगुणावधीप्स
या सदा स्थिता नोद्यमतोतिशेरते ॥ २२ ॥
त्वदाश्रितानां जगदुद्भवस्थितिप्रणाशसंसार
विमोचनादयः ॥ भवंति लीलाविधयश्च वै-

दिक्कास्त्वदीयगंभीरमनोनुसारिणः ॥ २३ ॥
नमो नमो वाङ्मनसातिभूमये नमोनमो वाङ्
मनसैकभूमये ॥ नमोनमोनंतमहाविभूतये
नमोनमोऽनंतदयैकसिंधवे ॥ २४ ॥ न धर्मनि-
ष्ठोस्मि न चात्मवेदी न भक्तिमांस्त्वच्चरणार
विंदे ॥ अकिंचनोनन्यगतिः शरण्यं त्वत्पाद
मूलं शरणं प्रपद्ये ॥ २५ ॥ न निंदितं कर्म त
दस्ति लोके सहस्रशो यन्न मया व्यधायि ॥
सोहं विपाकावसरे मुकुंद क्रंदामि संप्रत्यग
तिस्तवाग्रे ॥ २६ ॥ निमज्जतोनंतभवार्णवांत
श्चिराय मे कूलमिवासि लब्धः ॥ त्वयापि ल
ब्धं भगवन्निदानीमनुत्तमं पादमिदं दयायाः
॥ २७ ॥ अभूतपूर्वं मम भावि किंवा सर्वं सहे
मे सहजं हि दुःखं ॥ किंतु त्वदग्रे शरणागता
नां पराभवो नाथ न तेऽनुरूपः ॥ २८ ॥ निरास

कस्यापि न तावदुत्सहे महेश हातुं तव पादपं
कजं॥रुषानिरस्तोपि शिशुः स्तनंधयो न जा
तु मातुश्चरणौ जिहासति ॥ २९ ॥ तवामृत
स्यंदिनि पादपंकजे निवेशितात्मा कथमन्य
दिच्छति ॥ स्थितेरविंदे मकरंदनिर्भरे मधुव्र
तो न क्षुरकं हि वीक्षते॥ ३०॥त्वदंघ्रिमुद्दिश्य
कदापि केनचिद्यथा तथा वापि सकृत्कृतांज
लिः॥तथैव मुष्णात्यशुभान्यशेषतः शुभानिपु
ष्णाति न जातु हीयते ॥ ३१॥उदीर्णसंसार
दवाशुशुक्षणिं क्षणेन निर्वाप्य परां च निर्वृ
तिं॥प्रयच्छति त्वच्चरणारुणांबुजद्वयानुरागा
मृत्तसिंधुसीकरः ॥ ३२॥विलासविक्रांतपरा
वरालयं नमस्यदार्तिक्षपणे कृतक्षणम्॥धनं
मदीयं तव पादपंकजं कदा नु साक्षात्करवा
णि चक्षुषा ॥ ३३ ॥ कदा पुनः शखरथांगक

त्पकध्वजारविंदांकुशवज्रलांछनं ॥ त्रिविक्रम त्वच्चरणांबुजद्वयं मदीयमूर्द्धानमलंकरिष्यति ॥ ३४ ॥ विराजमानोज्ज्वलपीतवाससं स्मितातसीसूनसमामलच्छविं ॥ निमग्ननाभिं तनुमध्यमुल्लसद्विशालवक्षःस्थलशोभिलक्षणम् ॥ ३५ ॥ चकासतं ज्याकिणकर्कशैः शुभैश्चतुर्भिराजानुविलंबिभिर्भुजैः ॥ प्रियावतंसोत्पलकर्णभूषणश्लथालकाबंधविमर्द्दशंसिभिः ॥ ३६ ॥ उदग्रपीनांसविलंबिकुंडलालकावलीबंधुरकंबुकंधरं ॥ मुखश्रिया न्यक्कृतपूर्णनिर्मलामृतांशुबिंबाम्बुरुहोज्ज्वलश्रियं ॥ ३७ ॥ प्रबुद्धमुग्धाम्बुजचारुलोचनं सविभ्रमभ्रूलतमुज्ज्वलाधरं ॥ शुचिस्मितं कोमलगंडमुन्नसं ललाटपर्य्यंतविलंबितालकं ॥ ३८ ॥ स्फुरत्किरीटांगदहारकंठिकामणींद्रकांचीगुणनूपुरादि-

भिः ॥ रथांगशंखासिगदाधनुर्वरैर्लसत्तुलस्या वनमालयोज्ज्वलं॥ ३९॥ चकर्थ यस्या भवनं भुजांतरं तव प्रियं धाम यदीयजन्मभूः॥ जगत्समग्रं यदपांगसंश्रयं यदर्थमंभोधिरमंथ्यबंधि च ॥ ४० ॥ स्ववैश्वरूप्येण सदानुभूतयाप्यपूर्ववद्विस्मयमादधानया ॥ गुणेन रूपेण विलासचेष्टितैः सदा तवैवोचितया तव श्रिया॥ ४१ ॥ तया सहासीनमनंतभोगिनि प्रकृष्टविज्ञानबलैकधामनि ॥ फणामणिव्रातमयूखमंडलप्रकाशमानोदरदिव्यधामनि ॥ ॥ ४२ ॥ निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणादिभिः ॥ शरीरभेदैस्तव शेषतां गतैर्यथोचितं शेष इतीर्यते जनैः ॥ ४३ दासः सखा वाहनमासनं ध्वजो यस्ते वितानं व्यजनं त्रयीमयः ॥ उपस्थितं तेन पुरो गरु

त्मता त्वदंघ्रिसंमर्दकिणांकशोभिना ॥ ४४॥
त्वदीयभक्तोज्झितशेषभोजिना त्वया विसृ
ष्टात्मभरेण यद्यथा ॥ प्रियेण सेनापतिना
निवेदितं तथानु जानंतमुदारवीक्षणैः॥ ४५
हताखिलक्लेशमलैः स्वभावतः सदानुकूल्यै
करसैस्तवोचितैः ॥ गृहीततत्तत्परिचारसाध
नैर्निषेव्यमाणं सचिवैर्यथोचितम्॥ ४६ ॥अपू
र्वनानारसभावनिर्भरप्रबुद्धया मुग्धविदग्ध
लीलया ॥ क्षणानुपाक्षिप्तपरादिकालया प्रह
र्षयंतं महिषीं महाभुजम् ॥ ४७ ॥अचिंत्यदि
व्याद्भुतनित्ययौवनस्वभावलावण्यमयामृतो
दधिम्॥श्रियःश्रियं भक्तजनैकजीवितं समर्थ
मापत्सखमर्थिकल्पकम् ॥ ४८॥ भवंतमेवानु
चरन्निरंतरं प्रशांतनिःशेषमनोरथांतरः ॥ क
दाहमैकांतिकनित्यकिंकरः प्रहर्षयिष्यामिस.

नाथजीवितम् ॥ ४९ ॥ धिगशुचिमविनीतं निर्दयं मामलज्जं परमपुरुष योऽहं योगिवर्याग्रगण्यैः॥ विधिशिवसनकाद्यैर्ध्यातुमत्यंतदूरं तव परिजनभावं कामये कामवृत्तः॥५०॥ अपराधसहस्रभाजनं पतितं भीमभवार्णवोदरे॥ अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरु ॥ ५१ ॥ अविवेकघनांधदिङ्मुखे बहुधा संततदुःखवर्षिणि॥ भगवन् भवदुर्दिने पथःस्खलितं मामवलोकयाच्युत॥५२॥ न मृषा परमार्थमेव मे शृणु विज्ञापनमेकमग्रतः यदि मे न दयिष्यसे ततो दयनीयस्तव नाथ दुर्लभः॥५३॥ तदहं त्वदृते न नाथवान्मदृते त्वं दयनीयवान्न च ॥ विधिनिर्मितमेतदन्वयं भगवन् पालय मा स्म जीहपः॥५४॥ वपुरादिषु योपि कोपि वा गुणतोऽसानि यथा तथा

विधः ॥ तदहं तव पादपद्मयोरहमद्यैव मया समर्पितः॥५५॥मम नाथ यदस्ति योस्म्यहं सकलं तद्धि तवैव माधव॥नियतः स्वमिति प्रबुद्धधीरथवा किंनु समर्पयामि ते ॥ ५६ अवबोधितवानिमां यथा मयि नित्यं भवदीयतां स्वयं ॥ कृपयैवमनन्यभोग्यतां भगवन् भक्तिमयि प्रयच्छमे ॥ ५७ ॥तव दास्यसुखैकसंगिनां भवनेष्ववस्त्वपि कीटजन्म मे ॥ इतरावसथेषु मा स्म भूदपि मे जन्म चतुर्मुखात्मना ॥ ५८ ॥सकृत्त्वदाकारविलोकनाशया तृणीकृतानुत्तमभुक्तिमुक्तिभिः ॥ महात्मभिर्मामवलोक्यतां नय क्षणेपि ते यद्विरहोतिदुःसहः ॥ ५९ ॥ न देहं न प्राणान्न च सुखमशेषाभिलषितं नचात्मानं नान्यत्किमपि तव शेषत्वविभवात् ॥ बहिर्भूतं नाथ क्षणमपि सहे

यातु शतधा विनाशं तत्सत्यं मधुमथन विज्ञा
पनमिदं ॥ ६० ॥ दुरंतस्यानादेरपीरहरणी
यस्य महतो विहीनाचारोहं नृपशुरशुभस्या
स्पदमपि ॥ दयासिंधो बंधो निरवधिकवात्स
ल्यजलधे तव स्मारंस्मारं गुणगणमितीच्छा
मि गतभीः ॥ ६१ ॥ अनिच्छन्नप्येवं यदि पु
नरपीच्छन्नवरजस्तव च्छन्नच्छन्नस्तुतिन्नच-
नभंगीमरचयम् ॥ तथापीत्थं रूपं वचनमव-
लंब्यापि कृपया त्वमेवैवंभूतं धरणिधर मे शि-
क्षय मनः॥६२॥पिता त्वं माता त्वं दयिततन
यस्त्वं प्रियसुहृत्त्वमेव त्वं मित्रं गुरुरपि गति
श्चासि जगतां ॥ त्वदीयस्त्वद्भृत्यस्तव परिज
नस्त्वद्गतिरहं प्रपन्नश्चैवं सत्यहमपि तवैवा
स्मि हि भरः ॥ ६३ ॥ जनित्वाहं वंशे महति
जगति ख्यातयशसां शुचीनां युक्तानां गुणप

रुषत्तत्त्वस्थितिविदां ॥ निसर्गादेव त्वच्चरणकमलैकांतमनसामधोधः पापात्मा शरणद निमज्जामि तमसि ॥ ६४ ॥ अमर्यादः क्षुद्रश्चलमतिरसूयाप्रसवभूः कृतघ्नो दुर्मानी स्मरपरवशो वंचनपरः ॥ नृशंसः पापिष्ठः कथमहमितो दुःखजलधेरपारादुत्तीर्णस्तव परिचरेयं चरणयोः ॥ ६५ ॥ रघुवर यदभूस्त्वं तादृशो वायसस्य प्रणत इति दयालुर्यस्य चैद्यस्य कृष्ण ॥ प्रतिभवमपराद्धुर्मुग्धसायुज्यदोभूर्वद किमु पदमागस्तस्य तेऽतिक्षमायाः ॥ ६६ ॥ ननु प्रपन्नस्सकृदेव नाथ तवाहमस्मीति च याचमानः ॥ तवानुकंप्यः स्मर तत्प्रतिज्ञां मदेकवर्ज्यं किमिदं व्रतं ते ॥ ६७ ॥ अकृत्रिमत्वच्चरणारविंदप्रेमप्रकर्षावधिमात्मवंतं ॥ पितामहं नाथमुनिं विलोक्य प्रसीद मद्वृत्तमचिंतयित्वा ॥

॥ ६८॥ यत्पदांभोरुहध्यानविध्वस्ताशेषक
ल्मषः ॥वस्तुतामुपयातोहं यामुनेयं नमामि
तम् ॥६९ ॥ ॥ इति श्रीयामुनार्यविरचितं
आलवंदारस्तोत्रं संपूर्णम् ॥ ११ ॥ श्रीसीता
रामचंद्रार्पणमस्तु ॥ ॥ ॥ ॥

## पंचायुधस्तोत्रम्.

श्रीमते रामानुजाय नमः॥स्फुरत्सहस्रारशि
खातितीव्रं सुदर्शनं भास्करकोटितुल्यं ॥सुर
द्विषां प्राणविनाशि विष्णोश्चक्रं सदाहं शर
णं प्रपद्ये ॥ १ ॥ विष्णोर्मुखोत्थानिलपूरित
स्य यस्य ध्वनिर्दानवदर्प्पहंता ॥ तं पांचज
न्यं शशिकोटिशुभ्रं शंखं सदाहं शरणं प्रपद्ये
॥२॥ हिरण्मयीं मेरुसमानसारां कौमोदकीं
दैत्यकुलैकहंत्रीं ॥ वैकुंठवामाग्रकराभिमृष्टां

गदां सदाहं शरणं प्रपद्ये ॥ ३ ॥ रक्षोसुराणां कठिनोग्रकंठच्छेदक्षरच्छोणितदिग्धधारं ॥ तं नंदकं नाम हरेः प्रदीप्तं खड्गं सदाहं शरणं प्रपद्ये ॥ ४ ॥ यज्ज्यानिनादश्रवणात्सुराणां चेतांसि निर्मुक्तभयानि सद्यः॥भवंति दैत्याशनिबाणवर्षि शार्ङ्गं सदाहं शरणं प्रपद्ये ॥ ॥५॥इमं हरेः पंचमहायुधानां स्तवंपठेद्योऽनुदिनं प्रभाते॥समस्तदुःखानि भयानि सद्यः पापानि नश्यंति सुखानि संति॥६॥वने रणे शत्रुजलाग्निमध्ये यदृच्छयापत्सु महाभयेषु॥ इदं पठन् स्तोत्रमनाकुलात्मा सुखी भवेत्तत्कृतसर्वरक्षः ॥७॥ भोगे रोगभयं सुखे क्षयभयं वित्ते च राज्ञो भयं विद्यायां कलिभीस्तपे करणभी रूपाद्भयं योषिति ॥ इष्टे शोकभयं रणे रिपुभयं काये कृतांताद्भयं चेत्थं जन्म

निरर्थकं क्षितितले विष्णोः पदं निर्भयम् ॥
॥ ८ ॥ इति पंचायुधस्तोत्रंसंपूर्णम् ॥ १२ ॥
श्रीजगदंबार्पणमस्तु ॥ ॥ ॥छ॥

## संक्षिप्तरामायणम्

श्रीमते रामानुजाय नमः॥ आदौ रामतपोव नाधिगमनं हेम्नोरुरोर्मारणं वैदेहीहरणं जटायुमरणं सुग्रीवसंभाषणं ॥ वालीनिर्दलनं समुद्रतरणं लंकापुरीदाहनं पश्चाद्रावणकुंभ कर्णहननं चैतद्धि रामायणं ॥ इतिश्रीसंक्षिप्त रामायणं संपूर्णम् ॥ १३ ॥ ॥ ॥ ॥ ॥

## वरदवल्लभास्तोत्रम्

श्रीमते रामानुजाय नमः॥ कांतस्ते पुरुषोत्तमः फणिपतिः शय्यासनं वाहनं वेदात्मा विहगेश्वरो जवनिका माया जगन्मोहिनी ॥ ब्रह्मेशादिसुरव्रजः सदयितस्त्वद्दासदासीगणः

श्रीरित्येव च नाम ते भगवति ब्रूमः कथं त्वां
वयम् ॥ १ ॥ यस्य.स्ते महिमानमात्मनइव
त्वद्वल्लभोपि प्रभुर्नालं मातुमियत्तया निरव
धिं नित्यानुकूलं स्वतः॥तां त्वां दास इति प्र
पन्न इति च स्तोष्याम्यहं निर्भयो लोकैकेश्व
रि लोकनाथदयिते दान्ते दयांते विदन् ॥
॥ २ ॥ईषत्त्वत्करुणानिरीक्षणसुधासंधुक्षणा
द्रक्षसे नष्टं प्राक्त्वदलाभतस्त्रिभुवनं संप्रत्य
नंतोदयं॥श्रेयो नह्यरविंदलोचनमनःकांता
प्रसादादृते संसृत्याक्षरवैष्णवाध्वसु नृणां
संभाव्यते कर्हिचित् ॥ ३ ॥ शांतानन्तमहा
विभूतिपरमं यद्ब्रह्मरूपं हरे मूर्तं ब्रह्म ततोपि
यत्प्रियतरं रूपं यदत्यद्भुतम् ॥ यान्यन्या
नि यथासुखं विहरतो रूपाणि सर्वाणि ता
न्याहुः स्वैरनुरूपरूपविभवैर्गाढोपगूढानि ते

॥४॥आकारत्रयसंपन्नामरविंदविलासिनीं॥
अशेषजगदीशित्रींवंदेवरदवल्लभाम् ॥ ५ ॥
इति श्रीवरदवल्लभास्तोत्रंसंपूर्णं ॥ १४॥ ॥

## भवमंगलाष्टकम्

श्रीमते रामानुजाय नमः॥श्रीरंगंकरिशैल-मंजनागिरौ शेषाद्रिसिंहाचलं श्रीकूर्मं पुरुषोत्तमं च बदरीनारायणं नैमिषं॥श्रीमद्द्वारवती प्रयागमथुरायोध्यागयापुष्करं शालग्रामनिवासिनोविजयते रामानुजोयं मुनिः ॥ १ ॥स वैषां कृतिनां चरंति गुरवः कैंकर्यनिष्ठाहरेः श्रीरामानुजयोगिनायकमणिश्रीपादपद्मालयाः ॥ भोग्याष्टाक्षरमंत्ररत्नचरमश्लोकानुसंध्यायिनो वंद्या भागवतोत्तमाः प्रतिदिनं कुर्वंतु मे मंगलं ॥ २ ॥स श्रीमान्परमः पुमानथ चतुर्व्यूहावतारस्ततो जाताव्यूहपरंपरास्सु

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रचिताः श्रीकेशवाद्याः पराः ॥ एकांभोनिधिशे
षभोगशयनन्यग्रोधपत्राश्रयक्षीरोदन्वदनंत
तल्पसुखदाः कुर्वंतु मे मंगलं ॥ ३ ॥ श्रीरामा
नुजयोगिपूर्णयमुनावास्तव्यमालाधरानाथः
कारितनूजसैन्यपरमः श्रीमांश्चनारायणः ॥
चंडाद्याः कुमुदादयःपरिजना नित्याश्चमुक्ता
श्चये श्रीवैकुंठनिवासिनोमरवराः कुर्वंतु मे मं
गलं ॥ ४ ॥ मत्स्यःकूर्मवराहमानवहरिश्री
वामनो भार्गवः श्रीरामो बलदेवदेवकिसुतौ
कल्की दशैते क्रमात् ॥ अंतर्याम्यथ योगिनां
हृदयगोप्यर्च्चावताराः शुभाः श्रीरंगादिसम
स्तधामनिलयाः कुर्वंतु मे मंगलं ॥ ५ ॥ श्री
भूमिर्विमलादयोनवसुधापद्माधृताः शक्तयो
वेदावेदवती धरापि च महालक्ष्मीः सुकेशा
लया ॥ देवी भार्गवभामिनी जनकजा सा रेव

ती रुक्मिणी वेदाद्याप्रभयान्विता दश रमाः
कुर्वंतु मे मंगलं ॥ ६ ॥ शत्रुध्वंसि सुदर्शनं सु
खकरं श्रीपांचजन्यः सदा बाणाः शार्ङ्गममर्ष
हर्षजनकं कौमोदकी नंदकः॥सत्पद्मं मुसलं
हलं च परशुर्दिव्यायुधानि प्रभोः सेनाधीश
खगेशभोगिपतयः कुर्वंतु मे मंगलं ॥ ७ ॥ हं
सो धर्मनिदर्शनो हरिमुखो यज्ञश्च धन्वंतरिः
पाथोऽजो मिथुनोदितो हरिरलंकारः पृथि
व्याः पृथुः॥आद्यो वेदमुखश्च जन्मनिलयो
नारायणो वै विराट् श्वेतद्वीपनिवासिजीवहृद
यः कुर्वंतु नो मंगलम् ॥८॥विष्वक्सेनमुनि
र्ह्यनंतमुनयः श्रीसंप्रदायादिमा येऽन्ये भूतभ
विष्यद्दृश्यसमये श्रीरंगभूभूषणाः ॥ ये वै भा
गवंताःसुखा दशगणा भृत्या नरा वानराः
श्वेतद्वीपनिवासिनो नरवराः कुर्वंतु नो मंगलं

॥ ९ ॥ इत्युक्तं भवमंगलाष्टकमिदं सुश्लोकसंकीर्तनं श्रीमद्भागवतप्रसादजनकं श्रीवेंकटेशेन यत् ॥ भक्ता ये प्रपठंति शुद्धमनसः प्रोत्फुल्लहृत्पंकजास्तेषां वांछितमंगलं प्रकुरुते भक्तिप्रियो माधवः १० इ० श्री० वें० मं० सं० १

## वेंकटेशमंगलस्तोत्रम्.

श्रीमते रामानुजाय नमः ॥ श्रियः कांताय देवाय कल्याणनिधयेऽर्थिनाम् ॥ श्रीवेंकटनिवासाय श्रीनिवासाय मंगलम् ॥ १ ॥ लक्ष्मीसविभ्रमालोकसभ्रूविभ्रमचक्षुषे ॥ चक्षुषे सर्वलोकानां वेंकटेशाय मंगलम् ॥ २ ॥ श्रीवेंकटाद्रिशृंगाय मंगलाभरणांघ्रये ॥ मंगलानां निवासाय श्रीनिवासाय मंगलम् ॥ ३ ॥ सर्वावयवसौंदर्यसंपदा सर्वचेतसां ॥ सदा संमोहनायास्तु वेंकटेशाय मंगलम् ॥ ४ ॥ नि

त्याय निरवद्याय सत्यानंतचिदात्मने ॥सर्वां
तरात्मने श्रीमद्वेंकटेशाय मंगलम्॥५॥स्वत
स्सर्वविदे सर्वशक्तये सर्वशेषिणे ॥ सुलभाय
सुशीलाय वेंकटेशाय मंगलम् ॥६॥ परस्मै
ब्रह्मणे पूर्णकामाय परमात्मने ॥ प्रपन्नपरत
त्त्वाय वेंकटेशाय मंगलम् ॥७॥अकालतत्त्व
विश्रांतावात्मानमनुपश्यतां॥अतृप्तामृतरू
पाय वेंकटेशाय मंगलम् ॥ ८ ॥प्रायस्स्वचर
णौ पुंसां शरणत्वेन पाणिना ॥कृपया दृश्यते
श्रीमद्वेंकटेशाय मंगलम् ॥ ९ ॥दयामृततरं
गिण्यास्तरंगैरपि शीतलैः ॥ अपांगैस्सिंचते
विश्वं वेंकटेशाय मंगलम् ॥१० ॥ स्त्रग्भूषांब
रहेतीनां सुषमावहमूर्तये ॥सर्वार्तिशमनाया
स्तुवेंकटेशायमंगलम्॥११॥श्रीवैकुंठविरक्ता
य स्वामिपुष्करिणीतटे ॥रमया रममाणाय

वेंकटेशाय मंगलम् ॥ १२ ॥ श्रीमत्सुंदरजा मातृमुनिमानसवासिने॥सर्वलोकनिवासाय श्रीनिवासाय मंगलम् ॥ १३ ॥ नमःश्रीवेंकटेशाय शुद्धज्ञानस्वरूपिणे ॥ वासुदेवाय शांताय श्रीनिवासाय मंगलम् ॥ १४ ॥मंगलाशासनपरैर्मदाचार्यपुरोगमैः ॥ सर्वैश्चपूर्वैराचार्यैस्सत्कृतायास्तुमंगलम् ॥ १५ ॥ इति श्रीवेंकटेशस्य मंगलस्तोत्रं संपूर्णम् ॥१६॥

## क्षमाषोडशीस्तोत्रम्.

श्रीमते रामानुजाय नमः ॥ श्रीपराशरभट्टार्य्यः श्रीरंगेशपुरोहितः ॥ श्रीवत्सांकसुतः श्रीमान् श्रेयसे मेऽस्तु भूयसे ॥ १॥ श्रीरंगेश यया करोषि जगतां सृष्टिप्रतिष्ठाक्षयानत्रामुत्र च भोगमक्षयसुखं मोक्षं च तत्तत्तृषाम्॥ स्वत्स्वातंत्र्यमपोह्य कल्पितजगत्क्षेमाय ह

द्या स्वतः क्षांतिस्ते करुणासखी विजयतां क्षे
मायं सर्वात्मनाम्॥ २ ॥पापानां प्रथमोस्म्य
हं भवति चेच्छास्त्रं प्रमाणं परं श्रीरंगेश न वि
द्यतेत्र विशयः संत्येव ते साक्षिणः ॥ पृष्ट्वा ता
नधुना मयोदितमिदं सत्येन गृह्येत चेत् स
त्यं ह्युक्तमिति क्षमस्व भगवन् सर्वं तदस्मत्कृ
तम् ॥ ३॥ त्वत्क्षांतिः खलु रंगराज महती.त
स्याः पुनस्तोषणे पर्य्याप्तं न समस्तचेतनकृ
तं पापं ततोमामकम्॥लक्ष्यं नेति नमोकुम
र्हेति यतः कुत्रापि तुल्यो मया नान्यः सिध्य
ति पापकृत्तदनया लब्धं तु नोपेक्ष्यताम्॥ ४
पुण्यं पापमिति द्वयं खलु तयोः पूर्वेण यत्सा
ध्यते तत्त्वद्विस्मृतिकारकं तनुभृतां रंगेश सं
जायते ॥ पाश्चात्यस्य तु यत् फलं तदिह ते
दुःखच्छिदः स्मारकं तेनानेन कृतं तदेवाशिशु

नेत्यस्मत्कृतं क्षम्यताम् ॥५॥ पुण्यं यत्तव पूजनं भवति चेत् तत्कर्तुरिष्टे कृते तत्स्याद्रंगपते कृतप्रतिकृतं सर्वोपि तत्कुर्वते॥ पापंचेदपराधएव भवतस्तत्कर्तृसंरक्षणे क्षांतिस्ते निरुपाधिकी निरुपमा लक्ष्येत तत्क्षम्यताम् ६ न द्वित्राणि कृतान्यनेन निरयैर्नालं पुनः कल्पितैःपापानामिति मत्कृते तदधिकान् कर्तुं प्रवृत्ते त्वयि॥तेभ्योप्यभ्यधिकानि तान्यहमपि क्षुद्रः करोमि क्षणात्तद्यत्नस्तव निष्फलः खलु भवेत्तत्ते क्षमैव क्षमा ॥ ७ ॥ संभूयाखिलपातकैर्बहुविधं स्वंस्वं फलं दीयतां सर्वसह्यमिदं मया त्वयि हरे जाग्रत्यपि त्रातरि॥ दुःखाक्रांतमवेक्ष्य मामिह जनो दुष्टाशयस्त्वद्गुणान् क्षांत्यादीन् प्रति दुर्वचो यदि वदेत्सोढुं न तच्छक्यते॥ ८॥क्षांतिर्नाम वरो गुणस्त-

व महान् श्रीरंग पृथ्वीपते सोयं सन्नपि सापरा
धनिवहाभावे न विद्योतते ॥ तस्मान्नैकविधा
पराधकरणे निष्ठावता नित्यशः प्राप्नोत्येषम
या प्रकाशमतुलं प्राप्स्याम्यहं च प्रथाम् ॥
॥९॥मत्पापक्षपणाय योजयसि चेद् घोरेण
दंडेन मां रंगाधीश्वर केवलाघकरणाद्दुःखं म
म स्यान्महत् ॥ तद्द्रष्टुर्भवतोपि दुःखमतुलं
घोरं दयालोर्भवेत् तस्मात्तेऽपि सुखाय मत्कृ
तमिदं सर्वं त्वया क्षम्यताम् ॥१०॥ देव त्वां
शरणं प्रपन्नमपि मां दुःखान्यनन्याश्रयं बाधं
ते यदि सर्वपापनिवहात्त्वां मोक्षयिष्याम्यह
म्॥इत्युक्तं तव वाक्यमर्थविधुरं जायेत यद्वा
भवांस्तत्राशक्तइति प्रथेमहि ततो मां रक्षतु
त्वंत्क्षमा ॥११॥ न त्वं क्षाम्यसि चेदिदं मम
कृतं नास्त्यत्र काचिद् क्षतिः पूर्वं यत्समभूत्त

देव हि पुनर्जायेत तज्जायताम् ॥ यद्वा स्याद
धिकं च सोपि सुमहाँल्लाभोस्तु मे तादृशः स्वा
मिन्दासजनस्तवायमधिकं स्वैरेण दूरीभवेत्
॥१२॥सोहं क्षुद्रतया जुगुप्सिततमं दुष्क
र्म्म नित्यं स्मरन् कुर्वन्काममशुद्धरीतिरभवं
श्रीरंग पृथ्वीपते॥एतत्ते महतोविशुद्धमनसा
स्मर्तुं न युक्तं खलु क्षांत्या विस्मर तत्ततोहम
सुखान्मुक्तोभवेयं सुखी ॥१३॥ तत्तत्कर्मफ
लानुरूपमखिलो लोकस्त्वयासृज्यते तस्मा
त्कर्मवशंवदत्वमधिकं वक्तुं तवापि क्षमम् ॥
श्रीरंगेश्वर तत्प्रशांतिविषये क्षांत्या निराकृत्य
मे सर्वं पातकमाशु दर्शय भवत्स्वातंत्र्यमत्यु
ज्ज्वलम्॥१४॥श्रीरंगेश वचो मदीयमधुना
व्यक्तं त्वया श्रूयतां पुण्यं तत्फलसंगमात्र:
विरहाद्भूयो न मां प्राप्नुयात्॥पापं नैव तथा फ-

लं वितनुते शक्यं न तद्वारणं त्वत्क्षांत्यातव
शक्यमेव तदिदं सद्यस्त्वया कल्प्यताम्॥१५
श्रीरंगेश्वर पुण्यपापफलयोः स्वाधीनतांकुर्व-
तोःसर्वेषां सुखदुःखयोःस्वयमहं मन्नाशयोमा
मपि॥स्मर्तुं न प्रभवामि किं पुनरहं त्वामंतरं
तःस्थितं तत्ते त्वं क्षमया निरस्य कुरु मे त्व-
द्ध्यानयोग्यां दशाम् ॥१६॥ अल्पं चेदनपे-
क्षणीयसरणावारोप्यतां मत्कृतं किंचिद्भूरि
भवेदिदं यदि गुरून् संप्रेक्ष्य मे त्यज्यताम्॥
यद्वानंतमनंतवैभवजुषो रंगक्षमावल्लभ त्व-
त्क्षांत्याः खलु लक्ष्यतामनुगुणामानीयतां त
त्वया॥१७॥श्रीमान्कूरान्ववाये कलशजल-
निधौकौस्तुभांशोऽवतीर्णः श्रीवेदव्यासभट्टा-
रकतनयवरोरंगराजस्य हृद्यः ॥वेदाचार्य्या-
ख्यनामा विदितगुणगणो रंगिणः स्तोत्रमेत-

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ञ्चके नित्याभिजप्यं सकलतनुभृतां सर्वपापा-
पनुत्त्यै॥ १८॥ संत्यक्तसर्वविहितक्रियमर्थका-
म श्रद्धालुमन्वहमनुष्ठितनिंद्यकृत्यम्॥ अत्यं-
तनास्तिकमनात्मगुणोपपन्नं मां रंगराज कृप
या परया क्षमस्व॥ १९ ॥ इति श्रीक्षमाषोड
शीस्तोत्रं संपूर्णम् ॥ ७ ॥ ॥छ॥

## श्रीस्तवः

श्रीमते रामानुजाय नमः॥ स्वस्ति श्रीर्दिशता
दशेषजगतां सर्गापवर्गस्थितीः स्वर्गं दुर्गति
मापवर्गिकपदं सर्वं च कुर्वन् हरिः ॥ यस्यावी
क्ष्य मुखं तदिंगितपराधीनो विधत्तेऽखिलं क्री
डेयं खलु नान्यथाऽस्य रसदा स्यादैकरस्या
त्तया॥ १ ॥ हे श्रीर्देवि समस्तलोकजननीं त्वां
स्तोतुमीहामहे युक्तां भावय भारतीं प्रगुणय
प्रेमप्रधानां धियं ॥ भक्तिं वर्द्धय नंदयाश्रित

मिमं दासं जनं तावकं लक्ष्यंलक्ष्मि कटाक्षवी
विविसृतेस्ते स्यामचामी वयं॥ २ ॥स्तोत्रं ना
म किमामनंति कवयो यद्यन्यदीयान् गुणान
न्यत्र त्वसतोऽधिरोप्य भणितिः सा तर्हि वं
ध्या त्वयि ॥ सम्यक्सत्यगुणाभिवर्णनमथो
ब्रूयुः कथं तादृशी वाग्वाचस्पतिनाप्यशक्य
रचना त्वत्सद्गुणार्णोनिधौ॥ ३ ॥ये वाचां मन
सां च दुर्ग्रहतया ख्याता गुणास्तावकास्ताने
वं प्रति सानुजिह्वमुदिता यन्मामिका भार
ती॥हास्यं तत्तु न मन्महे नहि चकोर्येका
खिलां चंद्रिकां नालं पातुमिति प्रगृह्य रसना
मासीत सत्यांतृषि ॥ ४ ॥ क्षोदीयानपि दुष्ट
बुद्धिरपि निःस्नेहोऽप्यनीहोऽपि ते कीर्तिं दे
वि लिहन्नहं नचबिभेम्यज्ञो न जिन्हेमि च॥ दु
ष्येत्सातु न तावता नहि शुनालीढाऽपि भा

गीरथी शुद्ध्येच्छ्वापि न लज्जते नच बिभेत्या
र्तिस्तु शाम्येच्छुनः ॥५॥ ऐश्वर्यं महदेव वा
ल्पमथवा दृश्येत पुंसां हि यत्तल्लक्ष्म्याः समु
दीक्षणात्तव यतः सार्वत्रिकं वर्तते॥तेनैतेनन
विस्मयेमहि जगन्नाथोपि नारायणो धन्यं म
न्यत ईक्षणात्तव यतःस्वात्मानमात्मेश्वरः ॥
॥६॥ऐश्वर्यं यदशेषपुंसि यदिदं सौंदर्यला
वण्ययो रूपं यच्च हि मंगलं किमपि यल्लोके स
दित्युच्यते ॥ तत्सर्वंत्वदधीनमेव हि यतःश्री
रित्यभेदेन वा यद्वा श्रीमदितीदृशेन वचसा
देवि प्रथामश्नुते ॥ ७ ॥ देवि त्वन्महिमावधि
र्न हरिणा नापि त्वया ज्ञायते यद्यप्येवमथा
पि नैवयुवयोः सर्वज्ञता हीयते ॥ यन्नास्त्येव
तदज्ञतामनुगुणां सर्वज्ञताया विदुर्व्योमांभो
जमिदंतया खलुविदन् भ्रांतोयमित्युच्यते॥

॥ ८ ॥लोके वनस्पतिबृहस्पतितारतम्यं य
स्याः कटाक्षपरिणाममुदाहरंति॥सा भारती
भगवती तु यदीयदासी तां देवदेवमहिषीं
श्रियमाश्रयामः ॥ ९ ॥यस्याःकटाक्षमृदुवी
क्षणवीक्षणेन सद्यस्समुल्लसितपल्लवमुल्लला
स ॥विश्वं विपर्ययसमुत्थविपर्ययं प्राक् तां दे
वदेवमहिषीं श्रियमाश्रयामः ॥१०॥इतिश्री
श्रीस्तवःसंपूर्णः ॥ १८ ॥ ॥ ॥

## श्रीकृष्णाष्टोत्तरशतनामस्तोत्रं.

श्रीमते रामानुजाय नमः॥श्रीभूमिरुवाच॥
अलंकृतं जन्म पुंसामपि नंदव्रजौकसाम्॥त
स्य देवस्य कृष्णस्य लीलाविग्रहधारिणः ॥
॥ १ ॥ यानि यानि प्रयुक्तानि संति नामान्य
नेकशः॥ मुख्यानि तेषु नामानि श्रोतुकामा

च्चिरादहम् ॥ २॥ एतानि ब्रूहि नामानि वासु
देवस्य वासुके ॥ नातःपरतरं पुण्यं त्रिषु लो
केषु मे भवेत् ॥ ३॥ शेषउवाच॥ वसुंधरे वरा
रोहे सर्वकामसुखप्रदं ॥ सर्वमंगलमूर्द्धन्यम
णिमाद्यष्टसिद्धिदम् ॥ ४ ॥ महापातककोटि
घ्नं सर्वतीर्थफलप्रदम् ॥ शृणु देवि प्रवक्ष्यामि
नाम्नामष्टोत्तरं शतम् ॥ ५ ॥ सहस्रनाम्नां पु
ण्यानां त्रिरावृत्त्या च यत्फलम् ॥ एकावृत्त्या
च कृष्णस्य नामैकं तत्प्रयच्छति ॥ तस्मा
त्पुण्यतमं चैतत्स्तोत्रं श्रृणु वसुंधरे ॥ ६॥ ॐ
अस्य श्रीकृष्णाष्टोत्तरशतनामामृतस्तोत्रमं
त्रस्य ॥ श्रीशेषो भगवानृषिः॥ अनुष्टुप्छंदः॥
श्रीकृष्णः परमात्मा देवता ॥ श्रीकृष्णप्रसाद
सिद्ध्यर्थं जपे विनियोगः॥ ध्यानं॥ बालाय नी
लवपुषे नवकिंकिणीकजालाभिरामजघंना

य दिगंबराय॥शार्दूलदिव्यनखभूषणभूषिता
य नंदात्मजाय नवनीतमुषे नमस्ते ॥ ॐश्री
कृष्णःकमलानाथोवासुदेवः सनातनः ॥वसु
देवात्मजः पुण्यो लीलामानुषविग्रहः ॥ ७॥
श्रीवत्सकौस्तुभधरो यशोदावत्सलो हरिः ॥
चतुर्भुजात्तचक्राब्जगदाखड्गाद्युदायुधः॥८॥
देवकीनंदनः श्रीशो नंदगोपप्रियात्मजः॥ य
मुनावेगसंहारी बलभद्रप्रियानुजः ॥ ९॥पूत
नाजीविताहारः शकटासुरखंडनः ॥ नंदव्रज
जनानंदी सच्चिदानंदविग्रहः ॥ १०॥ नवनी
तविलिप्तांगो नवनीतनटोऽनघः॥नवनीतन
वाहारो मुचुकुंदप्रसादकः ॥ ११॥षोडशस्त्री
सहस्रेशस्त्रिभंगीललिताकृतिः ॥ शुकवागमृ
ताब्धींदुर्गोविंदो योगिनांपतिः ॥ १२ ॥वत्स
वाटचरोऽनंतो धेनुकासुरखंडनः ॥तृणीकृत

तृणावर्तो यमलार्जुनभंजनः ॥१३॥ उत्ताल
तालभेत्ता च तमालश्यामलाकृतिः ॥ गोप
गोपीश्वरो योगी कोटिसूर्यसमप्रभः ॥१४॥ इ
लापतिः परंज्योतिर्यादवेंद्रो यदूद्वहः ॥ वनमा
ली पीतवासाः पारिजातापहारकः ॥ १५ ॥
गोवर्द्धनाचलोद्धर्ता गोपालः सर्वपालकः ॥
अजो निरंजनः कामजनकः कंजलोचनः ॥
॥१६॥ मधुहा मथुरानाथो द्वारकानायको ब
ली॥ वृंदावनांतसंचारी तुलसीदामभूषणः॥
॥ १७ ॥ स्यमंतकमणेर्हर्ता नरनारायणात्म
कः ॥ कुब्जाकृष्टांबरधरो मायी परमपूरुषः ॥
॥१८॥ मुष्टिकासुरचाणूरमल्लयुद्धविशारदः॥
संसारवैरी कंसारिर्मुरारिर्नरकांतकः ॥१९॥
अनादिर्ब्रह्मचारी चकृष्णाव्यसनकर्षकः॥ शि
शुपालशिरश्छेत्ता दुर्योधनकुलांतकः॥२०॥

विदुराक्रूरवरदो विश्वरूपप्रदर्शकः ॥ सत्यवा
क्सत्यसंकल्पः सत्यभामारतो जयी ॥ २१ ॥
सुभद्रापूर्वजो जिष्णुर्भीष्ममुक्तिप्रदायकः ॥
जगद्गुरुर्जगन्नाथो वेणुवाद्यविशारदः ॥२२॥
वृषभासुरविध्वंसी बाणासुरखरांतकः ॥ यु
धिष्ठिरप्रतिष्ठाता बर्हिबर्हावतंसकः ॥ २३ ॥
पार्थसारथिरव्यक्तो गीतामृतमहोदधिः ॥का
लीयफणमाणिक्यरंजितश्रीपदांबुजः ॥२४
दामोदरो यज्ञभोक्ता दानवेंद्रविनाशकः॥ ना
रायणः परं ब्रह्म पन्नगाशनवाहनः ॥ २५ ॥
जलक्रीडासमासक्तगोपीवस्त्रापहारकः ॥ पु
ण्यश्लोकस्तीर्थपदो वेदवेद्यो दयानिधिः२६
सर्वभूतात्मकः सर्वग्रहरूपी परात्परः ॥ एवं
श्रीकृष्णदेवस्य नाम्नामष्टोत्तरं शतम्॥२७॥
कृष्णेन कृष्णभक्तेन श्रुत्वा गीतामृतं पुरा॥

स्तोत्रं कृष्णप्रियकरं कृतं तस्मान्मया श्रुतम् ॥ २८ ॥ कृष्णनामामृतं नाम परमानंदकारणम् ॥ अनुपद्रवदुःखघ्नं परमायुर्विवर्द्धनम् ॥ २९ ॥ दानं व्रतं तपस्तीर्थं यत्कृतं त्विहजन्मनि ॥ पठतां शृण्वतां चैव फलं कोटिगुणं भवेत् ॥ ३० ॥ पुत्रप्रदमपुत्राणामगतीनां गतिप्रदम् ॥ धनावहं दरिद्राणां जयेप्सूनांजयावहम् ॥ ३१ ॥ शिशूनां गोकुलानां च पुष्टिदं पूर्णपुण्यदम् ॥ समस्तकामदं दिव्यं कोटिजन्माघनाशनम् ॥ ३२ ॥ अंते च कृष्णस्मरणं भवतापत्रयापहम् ॥ कृष्णाय यादवेंद्राय ज्ञानमुद्राय योगिने ॥ ३३ ॥ नाथाय रुक्मिणीशाय नमो वेदांतवेदिने ॥ इमं मंत्रं महादेवि ब्रह्मनिष्ठो दिवानिशम् ॥ ३४ ॥ मनसा चिंतयन्नित्यं जपन् शुद्धशरीरभाक् ॥ सर्वग्रहानुग्रह

भाक् सर्वप्रियतमो नरः ॥ ३५ ॥ पुत्रपौत्रैःप
रिवृतः समृद्धं फलमाप्नुयात् ॥ विलस्य भो
गानंते च कृष्णसायुज्यमाप्नुयात् ॥ ३६ ॥शं
खचक्रगदापाणे द्वारकानिलयाच्युत ॥ गो
विंद पुंडरीकाक्ष रक्ष मां शरणागतं ॥ ३७ ॥
इति श्रीशेषधरणीसंवादे कृष्णाष्टोत्तरशतना
मस्तोत्रं संपूर्णं ॥ १९ ॥ ॥ ॥

## श्रीमुकुंदमालास्तोत्रम्.

श्रीमते रामानुजाय नमः॥ घुष्यते यस्य न
गरे रंगयात्रा दिने दिने ॥ तमहं शिरसा वंदे
राजानं कुलशेखरं ॥ १ ॥ श्रीवल्लभेति वरदे
ति दयापरेति भक्तप्रियेति भवलुंठनकोविदे
ति ॥ नाथेति नागशयनेति जगन्निवासेत्या
लापिनं प्रतिपदं कुरु मां मुकुंद ॥ १ ॥जयतु

जयतु देवो देवकीनंदनोऽयं जयतु जयतु कृ
ष्णो वृष्णिवंशप्रदीपः ॥ जयतु जयतु मेघ
श्यामलःकोमलांगो जयतु जयतु पृथ्वीभार
नाशो मुकुंदः॥ २ ॥ मुकुंद मूर्ध्ना प्रणिपत्य या
चे भवंतमेकांतमियंतमर्थम्॥अविस्मृतिस्त्व
च्चरणारविंदे भवे भवे मेऽस्तु भवत्प्रसादात्॥
॥ ३ ॥ नाहं वंदे तव चरणयोर्द्वंद्वमद्वंद्वहेतोः
कुंभीपाकं गुरुमपि हरे नारकं नापनेतुम् ॥र
म्यारामामृदुतनुलतानंदने नाऽभिरंतुं भावे
भावे हृदयभवने भावयेयं भवंतम् ॥ ४ ॥ ना
स्था धर्मे न वसुनिचये नैव कामोपभोगे यद्य
द्भव्यं भवतु भगवन्पूर्वकर्मानुरूपम्॥एतत्प्रा
र्थ्यं मम बहुमतं जन्मजन्मांतरेऽपि त्वत्पादां
भोरुहयुगगतानिश्चला भक्तिरस्तु ॥ ५ ॥
दिवि वा भुवि वा ममास्तु वासो नरके वा नर

कांतक प्रकामम् ॥ अवधीरितशारदारविंदौ चरणौ ते मरणेऽपि चिंतयामि ॥६॥ चिंतयामि हरिमेव संततं मंदहासमुदिताननांबुजम् ॥ नंदगोपतनयं परात्परं नारदादिमुनिवृंदवंदितम् ॥ ७॥ करचरणसरोजे कांतिमन्नेत्रमीने श्रममुषि भुजवीचिव्याकुलेऽगाधमार्गे ॥ हरिसरसि विगाह्याऽऽपीय तेजोजलौघं भवमरुपरिखिन्नः क्लेशमद्य त्यजामि ॥ ८॥ सरसिजनयने सशंखचक्रे मुरभिदि मा विरमस्व चित्त रंतुम् ॥ सुखतरमपरं न जातु जाने हरिचरणस्मरणाऽमृतेन तुल्यम् ॥ ९ ॥ मा भैमंद मनो विचिंत्य बहुधा यामीश्चिरं यातना नामी नः प्रभवंति पापरिपवः स्वामी ननु श्रीधरः ॥ आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं लोकस्य व्यसनापनोद

नकरो दासस्य किं न क्षमः ॥ १० ॥ भवज
लधिगतानां द्वंद्ववाताहतानां सुतदुहितृक
लत्रत्राणभारार्दितानाम् ॥ विषमविषयतोये
मज्जतामप्लवानां भवतु शरणमेको विष्णुपो
तो नराणाम् ॥ ११ ॥ भवजलधिमगाधं दु
स्तरं निस्तरेयं कथमहमिति चेतो मास्म गाः
कातरत्वम् ॥ सरसिजदृशि देवे तावकी भ
क्तिरेका नरकभिदि निषण्णा तारयिष्यत्य
वश्यम् ॥ १२ ॥ तृष्णातोये मदनपवनोद्धू
तमोहोर्मिमाले दारावर्ते तनयसहजग्राह
संघाकुलेच ॥ संसाराख्ये महति जलधौ म
ज्जतां नस्त्रिधामन् पादांभोजे वरद भवतो
भक्तिभावं प्रयच्छ ॥ १३ ॥ पृथ्वीरेणुरणुः
पयांसि कणिकाः फल्गुस्फुलिंगोलघुस्ते
जो निःश्वसनं मरुत्तनुतरं रंध्रं सुसूक्ष्मं नभः।

क्षुद्राः रुद्रपितामहप्रभृतयः कीटाः समस्ताः
सुरा दृष्टो यत्र स तावको विजयते भूमाऽवधू
तावधिः ॥ १४ ॥ हे लोकाः शृणुत प्रसूतिम
रणव्याधेश्चिकित्सामिमां योगज्ञाः समुदाह
रंति मुनयो यां याज्ञवल्क्यादयः ॥ अंतर्ज्यो
तिरमेयमेकममृतं कृष्णाख्यमापीयतां त
त्पीतं परमौषधं वितनुते निर्वाणमात्यंति
कम् ॥ १५ ॥ हे मर्त्याः परमं हितं शृणुत वो
वक्ष्यामि संक्षेपतः संसारार्णवमापदूर्मिब
हुलं सम्यक्प्रविश्य स्थिताः ॥ नानाज्ञानम
पास्य चेतसि नमोनारायणायेत्यमुं मंत्रं स
प्रणवं प्रणामसहितं प्रावर्तयध्वं मुहुः ॥१६॥
नाथे नः पुरुषोत्तमे त्रिजगतामेकाधिपे चे
तसा सेव्ये स्वस्य पदस्य दातरि परे नाराय
णे तिष्ठति ॥ यं कंचित्पुरुषाधमं कतिपयग्रा

मेशमल्पार्थदं सेवायै मृगयामहे नरमहो मू
ढा वराका वयं ॥१७॥ बद्धेनांजलिना नतेन
शिरसा गात्रैः सरोमोद्गमैःकंठेन स्वरगद्गदेन
नयनेनोद्गीर्णबाष्पांबुना ॥ नित्यं त्वच्चरणार
विंदयुगलध्यानामृतास्वादिनामस्माकं सर
सीरुहाक्ष सततं संपद्यतां जीवितम् ॥ १८॥
यत्कृष्णप्रणिपातधूलिधवलं तद्वर्ष्म तद्वै शिर
स्तेनेत्रे तमसोज्झिते सुरुचिरे याभ्यां हरिर्दृ
श्यते ॥ सा बुद्धिर्विमलेंदुशंखधवला या मा
धवध्यायिनी सा जिव्हाऽमृतवार्षिणी प्रति
पदं या स्तौति नारायणम् ॥ १९ ॥ जिव्हे
कीर्तय केशवं मुररिपुं चेतो भज श्रीधरं पाणि
द्वंद्व समर्चयाऽच्युतकथां श्रोत्रद्वय त्वं शृ
णु ॥ कृष्णं लोकय लोचनद्वय हरेर्गच्छांघ्रि
युग्मालयं जिघ्र घ्राण मुकुंदपादतुलसीं मू

द्वंन्नमाऽधोक्षजम् ॥ २० ॥ आम्नायाऽभ्य
सनान्यरण्यरुदितं वेदव्रतान्यन्वहं मेदश्छेद
फलानि पूर्तविधयः सर्वं हुतं भस्मनि ॥ ती
र्थानामवगाहनानि च गजस्नानं विना यत्प
दद्वंद्वांभोरुहसंस्मृतिं विजयते देवः स नारा
यणः ॥ २१ ॥ मदन परिहर स्थितिं मदीये
मनसि मुकुंदपदारविंदधाम्नि ॥ हरनयनकृ
शानुना कृशोसि स्मरसि न चक्रपराक्रमं मुरा
रेः ॥ २२ ॥ नाथे धातरि भोगिभोगशयने ना
रायणे माधवे देवे देवकिनंदने सुरवरे च
क्रायुधे शार्ङ्गिणि ॥ लीलाशेषजगत्प्रपंचज
ठरे विश्वेश्वरे श्रीधरे गोविंदे कुरु चित्तवृत्ति
मचलामन्यैस्तु किं वर्तनैः॥२३॥माद्राक्षंक्षी
णपुण्यान् क्षणमपि भवतो भक्तिहीनान्
पदाब्जे माश्रौषं श्राव्यबन्धं तव चरितमपा

स्यान्यदाख्यानजातम् ॥ मास्प्राक्षं माधव त्वामपि भुवनपते चेतसाऽपन्हुवानान् माभूवं त्वत्सपर्यापरिकररहितो जन्मजन्मांतरेपि ॥ २४॥ मज्जन्मनः फलमिदं मधुकैटभारे मत्प्रार्थनीय मदनुग्रहएषएव ॥ त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्यभृत्यस्य भृत्य इति मांस्मर लोकनाथ ॥ २५॥ तत्त्वं ब्रुवाणानि परं परस्तान्मधु क्षरंतीव मुदावहानि ॥प्रावर्तय प्रांजलिरस्मि जिह्वे नामानि नारायणगोचराणि ॥ २६ ॥ नमामि नारायणपादपंकजं करोमि नारायणपूजनं सदा ॥ वदामि नारायणनाम निर्मलं स्मरामि नारायणतत्त्वमव्ययम् ॥ २७ ॥ श्रीनाथ नारायण वासुदेव गोविन्द दामोदर चक्रपाणे ॥ श्रीपद्मनाभाच्युत कैटभारे कंसघ्न पद्माप्रिय शार्ङ्गपाणे२८

अनंत वैकुंठ मुकुंद राम जनार्दनानंद निरा
मयेति । वक्तुं समर्थोऽपि न वक्ति कश्चिदहो
जनानां व्यसनाभिमुख्यम् ॥ २९ ॥ भक्तापा
यभुजंगगारुडमणिस्त्रैलोक्यरक्षामणिर्गोपी
लोचनचातकांबुदमणिः सौंदर्यमुद्रामणिः ॥
यः कान्तामणिरुक्मिणीघनकुचद्वंद्वैकभूषाम
णिः श्रेयो देवशिखामणिर्दिशतु नो गोपा
लचूडामणिः ॥ ३० ॥ शत्रुच्छेदैकमन्त्रं
सकलमुपनिषद्वाक्यसम्पूज्यमंत्रं संसारोच्छे
दमंत्रं समुचिततमसः संघनिर्याणमंत्रम् ॥
सर्वैश्वर्यैकमन्त्रं व्यसनभुजगसन्दष्टसन्त्राण
मंत्रं जिव्हे श्रीकृष्णमंत्रं जप जप सततं जन्म
साफल्यमन्त्रम् ॥ ३१ ॥ व्यामोहप्रशमौषधं
मुनिमनोवृत्तिप्रवृत्त्यौषधं दैत्येंद्रार्तिकरौषधं
त्रिभुवने संजीवनैकौषधं ॥ भक्तात्यंतहितौष

धं भवभयप्रध्वंसनैकौषधं श्रेयःप्राप्तिकरौष
धं पिब मनः श्रीकृष्णदिव्यौषधम् ॥ ३२ ॥ कृ
ष्ण त्वदीयपदपंकजपंजरांतमद्यैव मे विशतु
मानसराजहंसः ॥ प्राणप्रयाणसमये कफवा
तपित्तैः कंठावरोधनविधौ स्मरणं कुतस्ते ३ ३
चेतश्चिंतय कीर्तयस्व रसने नम्रीभव त्वं शि
रो हस्तावंजलिसंपुटं रचयतं वंदस्व दीर्घं व
पुः॥ आत्मन् संश्रय पुंडरीकनयनं नागाचलें
द्रस्थितं धन्यं पुण्यतमं तदेव परमं दैवं हि सं
सिद्धये॥ ३४॥ शृण्वन् जनार्दनकथागुणकी
र्तनानि देहे नयस्यपुलकोद्गमरोमराजिः॥नो
त्पद्यते नयनयोर्विमलाम्बुमाला धिक् तस्य
जीवितमहो पुरुषाधमस्य ॥ ३५ ॥ अंधस्य मे
हृतविवेकमहाधनस्य चोरैःप्रभो बलिभिरिं
द्रियनामधेयैः ॥ मोहांधकूपकुहरे विनिपाति

तस्य देवेश देहि कृपणस्य करावलंबम् ३६
इदं शरीरं शतसन्धिजर्जरं पतत्यवश्यं परि
णामपेशलम्॥ किमौषधं पृच्छसि मूढ दुर्मते
निरामयं कृष्णरसायनं पिब ॥ ३७ ॥ आश्च
र्यमेतद्धि मनुष्यलोके सुधां परित्यज्य विषंपि
बंति ॥ नामानि नारायणगोचराणि त्यक्त्वा
न्यवाचः कुहकाः पठंति ॥३८॥ त्यजंतु बांध
वाः सर्वे निंदंतु गुरवो जनाः ॥ तथापि परमा
नंदो गोविंदो मम जीवनम् ॥ ३९ ॥ सत्यं ब्र
वीमि मनुजाः स्वयमूर्ध्वबाहुर्यो यो मुकुंद नर
सिंह जनार्दनेति॥ जीवो जपत्यनुदिनं मरणे
रणे वा पाषाणकाष्ठसदृशाय ददात्यभीष्टम्॥
॥ ४ ॥ नारायणाय नम इत्यमुमेव मंत्रं सं
सारघोरविषनिर्हरणाय नित्यम् ॥ शृण्वंतु भ
व्यमतयो यतयोऽनुरागादुच्चैस्तरामुपदिशा

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



म्यहमूर्ध्वबाहुः॥४१॥चित्तं नैव निवर्तते क्षण
मपिश्रीकृष्णपादांबुजान्निंदंतु प्रियबांधवा गु
रुजना गृण्हंतु मुंचंतु वा ॥ दुर्वादं परिघोषयं
तु मनुजा वंशे कलंकोऽस्तु वा तादृक्प्रेमधरा
नुरागमधुना मत्तायमानं तु मे ॥ ४२ ॥ कृ
ष्णोरक्षतु नो जगत्त्रयगुरुः कृष्णं नमध्वं सदा
कृष्णेनाखिलशत्रवो विनिहताः कृष्णाय त-
स्मै नमः॥कृष्णादेव समुत्थितं जगदिदं कृष्ण
स्य दासोस्म्यहं कृष्णे तिष्ठति विश्वमेतदखि
लं हे कृष्ण रक्षस्व माम् ॥४३॥ हे गोपालक
हे कृपाजलनिधे हे सिंधुकन्यापते हे कंसांत-
क हे गजेंद्रकरुणापारीण हे माधव॥हेरामानु-
ज हे जगत्त्रयगुरो हे पुंडरीकाक्ष मां हे गोपीज
ननाथ पालय परं जानामि न त्वां विना ४४
दारा वाराकरवरसुता ते तनूजो विरिंचिस्तो

ता वेदस्तव सुरगणा भृत्यवर्गः प्रसादः ॥मु
क्तिर्मायाजगदविकलं तावकी देवकी ते मा
ता मित्रं बलरिपुसुतस्तत्त्वदन्यं न जाने ४५
प्रणाममीशस्य शिरःफलं विदुस्तदर्चनं पा
णिफलं दिवौकसः॥मनः फलं तद्गुणतत्त्वचिं
तनं वाचः फलं तद्गुणकीर्तनं बुधाः ॥६॥श्री
मन्नाम प्रोच्य नारायणाख्यं के न प्राप्ता वां
छितं पापिनोऽपि ॥ हा नः पूर्वं वाक्प्रवृत्ता न
तस्मिंस्तेन प्राप्तं गर्भवासादि दुःखम्॥४७॥
ध्यायंति ये विष्णुमनंतमच्युतं हृत्पद्ममध्ये
सततं व्यवस्थितम्॥उपासकानां प्रभुमीश्वरे
श्वरं ते यांति सिद्धिं परमां तु वैष्णवीम्॥४८
स त्वं प्रसीद भगवन् कुरु मय्यनाथे विष्णो
कृपां परमकारुणिकः खलु त्वम् ॥ संसारसा
गरनिमग्नमनंत दीनमुद्धर्तुमर्हसि हरे पुरुषो

त्तमोऽसि ॥ ४९ ॥ क्षीरसागरतरंगसीकरासा
रतारकितचारुमूर्तये ॥ भोगिभोगशयनीय
शायिने माधवाय मधुविद्विषे नमः ॥५०॥ अ
लमलमलमेका प्राणिनां पातकानां निरसन
विषये या कृष्णकृष्णेति वाणी ॥ यदि भवति
मुकुंदे भक्तिरानंदसांद्रा करतलकलिता सा
मोक्षसाम्राज्यलक्ष्मीः ॥ ५१ ॥ यस्य प्रि
यौ श्रुतिधरौ कविलोकवीरौ मित्रे द्विजन्म
वरपार्श्वचरावभूताम् ॥ तेनांबुजाक्षचरणांबु
जषट्पदेन राज्ञा कृता कृतिरियं कुलशेख
रेण ॥५२॥ मुकुन्दमालां पठतां नराणामशे
षसौख्यं लभते न कः स्वित् ॥ समस्तपाप
क्षयमेत्य देही प्रयाति विष्णोः परमं पदं तत्
॥५३ ॥ इतिश्रीकुलशेखरकृतं मुकुंदमाला
स्तोत्रंसंपूर्णम् ॥ १९ ॥ ॥ ७ ॥

# अथ प्रार्थनापंचकम् । (८५)

श्रीमते रामानुजाय नमः ॥ यतीश्वर शृणु श्रीमन् कृपया परया तव ॥मम विज्ञापनमिदं विलोक्य वरदं गुरुम् ॥ १ ॥अनादिपापरचितामंतःकरणनिष्ठितां ॥यतीन्द्र विषये सान्द्रां विनिर्वासय वासनाम् ॥ २॥ अपि प्रार्थय मा नानां पुत्रक्षेत्रादिसंपदां ॥ कुरु वैराग्यमेवा त्र हितकारं यतीन्द्र नः॥ ३॥ यथाऽपराधा न स्युर्मे भक्तिः स्याद्भगवत्यापि॥तथा लक्ष्मणयोगीन्द्र यावद्देहं प्रवर्तय ॥ ४ ॥ अमोक्षं लक्ष्मणार्य त्वत्प्रबंधपरिशीलनैः ॥ कालक्षेपोऽस्तु नस्सद्भिस्सहवासमुपेयुषाम् ॥ ५ ॥ इत्येतत्सादरं विद्वान् प्रार्थनापंचकं पठन् ॥ प्राप्नुयात्परमां भक्तिं यतिराजपदाब्जयोः ॥ ६ ॥ इति प्रार्थनापंचकं समाप्तम् ॥ २० ॥ ॥

# ( ८६ )   अथ पूर्वदिनचर्या।

श्रीमते रामानुजाय नमः॥सौम्यजामातृयो
गींद्रचरणांबुजषट्पदम्॥देवराजगुरुं वंदे दि
व्यज्ञानप्रदं शुभम्॥ १ ॥ अंके कवेरकन्या
यास्तुंगे भुवनमंगले॥ रंगे धाम्नि सुखासीनं
वंदे वरवरं मुनिम्॥ २ ॥ मयि प्रविशति श्री
मन्मंदिरं रंगशायिनः॥ पत्युः पदांबुजं द्रष्टु
मायांतमविदूरतः॥ ३ ॥ सुधानिधिमिव स्वै
रं स्वीकृतोदग्रविग्रहम्॥ प्रसन्नार्कप्रतीकाश
प्रकाशपरिवेष्टितम्॥ ४ ॥ पार्श्वतः पाणिप
द्माभ्यां परिगृह्य भवत्प्रियौ॥विन्यस्यंतं शनै
रंघ्री मृदुलौ मेदिनीतले॥ ५ ॥अम्लानको
मलाकारमाताम्रविमलांबरम्॥ आपीनवि
पुलोरस्कमाजानुभुजभूषणम्॥ ६॥मृणाल
तंतुसंतानसंस्थानधवलत्विषा॥शोभितं यज्ञ

सूत्रेण नाभिबिंबसनाभिना ॥ ७ ॥अंभोजबी
जमालाभिरभिजातभुजांतरम् ॥ ऊर्ध्वपुंड्रैरु
पश्लिष्टमुचितस्थानलक्षणैः ॥ ८ ॥ काश्मीर
केसरस्तोमकडारस्निग्धरोचिषा ॥ कौशेयेन
समिंधानं स्कंधमूलावलंबिना ॥ ९ ॥ मंत्रर
त्नानुसंधानसंततस्फुरिताधरम्॥तदर्थतत्त्व
निध्यानसन्नद्धपुलकोद्गमम्॥१० ॥स्मयमा
नमुखांभोजं दयमानदृगंचलम् ॥ मयि प्रसा
दप्रवणं मधुरोदारभाषणम् ॥ ११ ॥ आत्म
लाभात्परं किंचिदन्यन्नास्तीति निश्चयात्॥
अंगीकर्तुमिव प्राप्तमकिंचनमिमं जनम्१२
भवंतमेव नीरंध्रं पश्यन्वश्येन चेतसा ॥ मुने
वरवर स्वामिन् मुहुस्त्वामेव कीर्त्तयन्॥१३॥
त्वदन्यविषयस्पर्शविमुखैरखिलेंद्रियैः ॥ भवे
यं भवदुःखानामसह्यानामनास्पदम्॥१४॥

परेद्युः पश्चिमे यामे यामिन्याः समुपस्थिते॥
प्रबुध्य शरणं गत्वा परां गुरुपरंपराम् ॥ १५॥
ध्यात्वा रहस्यत्रितयं तत्त्वयाथार्थ्यदर्पणम्॥
परव्यूहादिकान्पत्युः प्राकारान्प्रणिधाय च॥
॥१६॥ततःप्रत्युषसि स्नात्वा कृत्वा पौर्वाण्हि
कीःक्रियाः॥यतींद्रचरणद्वंद्वप्रवणेनैव चेतसा
॥ १७॥ अथ रंगनिधिं सम्यगभिगम्य निजं
प्रभुम् ॥श्रीनिधानं शनैस्तस्य शोधयित्वा प
दद्वयम् ॥ १८ ॥ततस्तत्संनिधिस्तंभमूलभू
तलभूषणम् ॥ प्राङ्मुखं सुखमासीनं प्रसाद
मधुरस्मितम् ॥ १९ ॥ भृत्यैःप्रियहितैकाग्रैः
प्रेमपूर्वमुपासितम् ॥ तत्प्रार्थनानुसारेण सं
स्कारान्संनिधाय मे ॥ २० ॥ अनुकंपापरी
वाहैरभिषेचनपूर्वकम् ॥ दिव्यं पदद्वयन्दत्वा
दीर्घं प्रणमतो मम ॥ २१ ॥ साक्षात्फलैक

लक्षत्वप्रतिपत्त्या पवित्रितम् ॥ मंत्ररत्नं प्रय
च्छंतं वंदे वरवरं मुनिम्॥२२॥ततः सार्द्धं वि
निर्गत्य भृत्यैर्नित्यानपायिभिः ॥ श्रीरंगमंग
लं द्रष्टुं पुरुषं भुजगेशयम् ॥ २३ ॥ महति
श्रीमति द्वारे गोपुरं चतुराननम् ॥ प्रणिपत्य
शनैरंतः प्रविशंतं भजामि तम् ॥ २४॥ देवी
गोदा यतिपतिशठद्वेषिणौ रंगशृंगं सेनानां
थो विहगवृषभः श्रीनिधिः सिंधुकन्या ॥ भू
मीनीलागुरुजनवृतः पूरुषश्चेत्यमीषामग्रे
नित्यं वरवरमुनेरंघ्रियुग्मं प्रपद्ये॥२५॥मंग
लाशासनं कृत्वा तत्र तत्र यथोचितम्॥धाम्न
स्तस्माद्विनिष्क्रम्य प्रविश्य स्वनिकेतनं २६
अथ श्रीशैलनाथार्यनाम्नि श्रीमति मंडपे॥त
दंघ्रिपंकजद्वंद्वच्छायामध्यनिवासिनाम्। २७
तत्वं दिव्यप्रबन्धानां सारं संसारवैरिणाम् ॥

सरसं सरहस्यानां व्याचक्षाणं प्रणौमि तम्
॥ २८ ॥ ततः स्वचरणांभोजस्पर्शसंपन्नसौ
रभैः ॥ पावनैरर्थिनस्तीर्थैर्भावयंतं भजामि
तम् ॥ २९ ॥ आराध्य श्रीनिधिं पश्चादनुया
गं विधाय च ॥ प्रसादपात्रं मां कृत्वा पश्यंतं
भावयामि तम् ॥ ३० ॥ ततश्चेतः समाधाय
पुरुषे पुष्करेक्षणे ॥ उत्तंसितकरद्वंद्वमुपविष्टमु
पह्वरे ॥ ३१ ॥ अब्जासनस्थमवदातसुजात
मूर्तिमामीलिताक्षमनुसंहितमंत्ररत्नं ॥ आन
म्रमौलिभिरुपासितमंतरंगैर्नित्यं मुनिं वरव
रं निभृतोभजामि ॥ ३२ ॥ ततः शुभाश्रये त
स्मिन्निमग्नं निभृतं मनः ॥ यतींद्रप्रवणं कर्तुं
यतमानं नमामि तम् ॥ ३३ ॥ इति श्रीपूर्वदि
नचर्या संपूर्णा ॥ २१ ॥ ॥ अस्मद्गुरुभ्योनमः
॥ अस्मत्परमगुरुभ्योनमः ॥ ҩ ҩ

श्रीमते रामानुजाय नमः॥ यःस्तुतिं यति
पतिप्रसादिनीं व्याजहार यतिराजविंशतिं॥
तं प्रपन्नजनचातकांबुदं नौमि सौम्यवरयो
गिपुंगवम्॥ १॥ श्रीमाधवांघ्रिजलजद्वयनि
त्यसेवाप्रेमाविलाशयपराङ्कुशपादभक्तम्॥
कामादिदोषहरमात्मपदाश्रितानां रामानुजं
यतिपतिं प्रणमामि मूर्ध्ना॥२॥श्रीरंगराजच
रणांबुजराजहंसं श्रीमत्परांकुशपदांबुजभृंग
राजम्॥श्रीभट्टनाथपरकालमुखाब्जमित्रं श्री
वत्सचिह्नशरणं यतिराजमीडे॥३॥ वाचा य
तींद्र मनसा वपुषा च युष्मत्पादारविंदयुगलं
भजतां गुरूणां॥ कूराधिनाथकुरुकेशमुखा
द्यपुंसां पादानुचिंतनपरः सततं भवेयम्॥४॥
नित्यं यतींद्र तव दिव्यवपुःस्मृतौ मे सक्तं म

नो भवतु वाग्गुणकीर्त्तनेऽसौ॥कृत्यं च दास्य करके तु करद्वयस्य वृत्त्यंतरेऽस्तु विमुखं कर णत्रयं च ॥ ५ ॥ अष्टाक्षराख्यमनुराजपदत्र यार्थनिष्ठां ममात्र वितराद्य यतींद्रनाथ ॥ शि ष्टाग्रगण्यजनसेव्यभवत्पदाब्जे हृष्टाऽस्तु नि त्यमनुभूय ममास्य बुद्धिः ॥ ६ ॥अल्पापि मे न भवदीयपदाब्जभक्तिः शब्दादिभोगरुचिर न्वहमेधते ह ॥ मत्पापमेव हि निदानममुष्य नान्यत्तद्वारयार्य यतिराज दयैकसिंधो ॥७॥ वृत्त्या पशुर्नरवपुस्त्वहमीदृशोपि श्रुत्यादिसि द्धनिखिलात्मगुणाश्रयोयम् ॥ इत्यादरेण कृ तिनोऽपि मिथः प्रवक्तुमद्यापि वंचनपरोत्र य तींद्र वर्त्ते ॥८॥ दुःखावहोऽहमनिशं तव दुष्ट चेष्टः शब्दादिभोगनिरतः शरणागताख्यः॥ त्वत्पादभक्तइव शिष्टजनौघमध्ये मिथ्याचरा

मि यतिराज ततोऽस्मि मूर्खः ॥९॥ नित्यं त्व
हं परिभवामि गुरुंचमंत्रंतद्देवतामपिन किंचि
दहो बिभेमि॥इत्थं शठोप्यशठवद्भवदीयसं
घे हृष्टश्चरामि यतिराज ततोऽस्मि मूर्खः१०
हा हंत हंत मनसा क्रियया च वाचा योऽहं च
रामि सततं त्रिविधापचारान् ॥ सोऽहं तवा
प्रियकरः प्रियकृद्वदेवत्कालं नयामि यतिराज
ततोस्मि मूर्खः ॥ ११ ॥ पापे कृते यदि भवं
ति भयानुतापलज्जाः पुनः करणमस्य कथं घ
टेत ॥ मोहेन मे न भवतीह भयादिलेशस्त
स्मात्पुनः पुनरघं यतिराज कुर्वे ॥ १२ ॥ अं
तर्बहिः सकलवस्तुषु संतमीशमंधः पुरःस्थि
तमिवाहमुपेक्षमाणः।कंदर्पवश्यहृदयःसततं
भवामि हंत त्वदग्रगमनस्य यतींद्र नार्हः१३
तापत्रयीजनितदुःखनिपातिनोपि देहस्थि

तौ मम रुचिस्तु न तन्निवृत्तौ॥एतस्य कारण
महो मम पापमेव नाथस्त्वमेव हर तद्यतिरा
ज शीघ्रम्॥१४॥वाचामगोचर महागुणदेशि
काग्र्य कूराधिनाथ कथिताखिलनैच्यपात्रं
॥एषोहमेव न पुनर्जगतीदृशस्तद्रामानुजार्य
करुणैव तु मद्गतिस्ते॥१५॥शुद्धात्मयामुनगु
रूत्तमकूरनाथभट्टाख्यदेशिकवरोक्तसमस्त
नैच्यम् ॥अद्यास्त्यसंकुचितमेवमपीहलोके
तस्माद्यतींद्रकरुणैव तु मद्गतिस्ते १६ शब्दा
दिभोगविषया रुचिरस्मदीया नष्टा भवत्वि
ह भवत्कृपयायतींद्र ॥त्वद्दासदासगणनाचर
मावधौ यस्तद्दासतैकरसताविरता ममास्तु
॥ १७ ॥ श्रुत्यग्रवेद्यनिजदिव्यगुणस्वरूपः
प्रत्यक्षतामुपगतास्त्विह रंगराजः॥ वश्यः स
दा भवति ते यतिराज तस्माच्छक्तः स्वकीय

जनपापविमोचने त्वम् ॥ १८॥ कालत्रयेपि
करणत्रयनिर्मितातिपापक्रियस्य शरणं भग
वत्क्षमैव ॥ सा च त्वयैव कमलारमणेर्थिता
यत्क्षेमः सएव हि यतींद्र भवच्छ्रितानाम् ॥
१९॥श्रीमद्यतींद्र तव दिव्यपदाब्जसेवां श्री
शैलनाथकरुणापरिणामदत्ताम् ॥ तामन्वहं
मम विवर्द्धय नाथ तस्यां कामं विरुद्धमखिलं
च निवर्त्तय त्वम् ॥ २० ॥ विज्ञापनं यदिदम
द्य तु मामकीनमंगीकुरुष्व यतिराज दयांबु
राशे ॥ अज्ञोयमात्मगुणलेशविवर्जितश्च त
स्मादनन्यशरणोभवतीति मत्वा॥२१॥इति
यतिकुलधुर्यमेधमानैः श्रुतिमधुरैरुदितैःप्रह
र्षयंतम् ॥ वरवरमुनिमेव चिंतयंती मतिरिय
मेति निरत्ययं प्रसादं ॥ २२ ॥ ॥ इति श्री
यतिराजविंशतिःसंपूर्णा ॥ २२ ॥

(९६) अथ उत्तरदिनचर्या।

श्रीमते रामानुजाय नमः॥ ॥ अथ गोष्ठींग
रिष्ठानामधिष्ठाय सुमेधसाम्॥ वाक्यालंकृ
तिवाक्यानि व्याख्यातारं नमामि तम्॥१॥
सायंतनं ततः कृत्वा सम्यगाराधनं हरेः॥स्वै
रालापैः शुभैः श्रोतॄन् नंदयंतं नमामि तं॥२
ततः कनकपर्यंके तरुणद्युमणिद्युतौ॥विशा
लविमलश्लक्ष्णतुंगतूलासनोज्ज्वले॥३॥स
मग्रसौरभोद्गारनिरंतरदिगंतरे॥ सोपधाने
सुखासीनं सुकुमारे वरासने॥ ४ ॥ उन्मील
त्पद्मगर्भद्युतितलमुपरि क्षीरसंघातगौरं रा
काचन्द्रप्रकाशप्रचुरनखमणिद्योतविद्योतमा
नम्।अंगुल्यग्रेषु किंचिन्नतमतिमृदुलं सौम्य
जामातृयोगिन् दिव्यं त्वत्पादयुग्मं दिशतु
शिरसि मे देशिकेंद्रो दयालुः॥५॥त्वं मे बंधु

स्त्वमसि जनकस्त्वं सखा देशिकस्त्वं विद्या
वृत्तं सुकृतमतुलं वित्तमप्युत्तमं त्वम्॥आत्मा
शेषी भवसि भगवन्नांतरः शासिता त्वं यद्वा
सर्वं वरवरमुने यद्यदात्मानुरूपम् ॥६॥अग्रे
पश्चादुपरि परितो भूतले पार्श्वतो मे मौलौ व
क्त्रे वपुषि सकले मानसांभोरुहे च ॥ दर्शंदर्शं
वरवरमुने दिव्यमंघ्रिद्वयं ते नित्यं मज्जन्नमृत
जलधौ निस्तरेयं भवाब्धिम्॥७॥कर्माधीने
वपुषि कुमतिः कल्पयन्नात्मभावं दुःखे मग्नः
किमिति सुचिरं दूयते जंतुरेषः॥ सर्वं त्यक्त्वा
वरवरमुने संप्रति त्वत्प्रसादाद्दिव्यं प्राप्तं तव
पदयुगं देहि मे सुप्रभातं ॥८॥या या वृत्तिर्म
नसि मम सा जायतां संस्मृतिस्ते यो यो ज
ल्पः स भवतु विभो नामसंकीर्तनं ते ॥ या या
चेष्टा वपुषि भगवन् साभवेद्वंदनं ते सर्वं भूया

द्वरवरमुने सम्यगाराधनं ते ॥ ९॥अपगतम
दमानैरंतिमोपायनिष्ठैरधिगतपरमार्थैरर्थका
मानपेक्षैः॥ निखिलजनसुहृद्भिर्निर्जितक्रोध
लोभैर्वरवरमुनिभृत्यैरस्तु मे नित्ययोगः १०
इति स्तुतिनिबंधेन सूचितस्वमनीषितान्॥
भृत्यान्प्रेमार्द्रया दृष्ट्या सिंचंतं चिंतयामि
तं॥ ११॥अथ भृत्याननुज्ञाप्य कृत्वा चेतःशु-
भाश्रयम्॥शयनीयं परिष्कृत्य शयानं संस्मरा
मि तम्॥ १२॥दिनचर्य्यामिमां दिव्यसौम्य-
जामातृयोगिनः॥भक्त्या नित्यमनुध्यायन्प्रा
प्नोति परमं पदम्॥ १३ ॥ प्रपद्ये पदपद्मानि
परमप्रेमसंपदाम् ॥ सौम्यजामातृयोगींद्रच-
रणैकजुषां सताम् ॥ १४ ॥संपत्स्वरूपानुगु-
णैव यस्मिन् सर्वोत्तरो यत्र मनःप्रसादः॥स-
द्भिःसमं दैवतमेव देशं प्राप्यं प्रपद्ये भवदंघ्रि-

मूलम्॥१५॥यन्मूलमाश्वयुजि मास्यवतार-
मूलं कान्तोपयंतृयमिनःकरुणैकसिंधोः॥आ
सीदसत्सु गणितस्य ममापि सत्ता मूलं तदे
वजगदभ्युदयैकमूलम्॥१६॥न चेद्रामानु-
जेत्येषा चतुरा चतुरक्षरी॥कामवस्थां प्रपद्यं-
ते जंतवो हंत मादृशाः॥१७॥पुण्यांभोजवि-
कासाय पापध्वांतक्षयाय च॥श्रीमानाविर-
भूद्भूमौ रामानुजदिवाकरः॥१८॥तृणीकृत-
विरिंच्यादिनिरंकुशविभूतयः॥ रामानुजप-
दांभोजसमाश्रयणशालिनः॥१९॥ इतिश्री-
उत्तरदिनचर्या संपूर्णा॥ २३॥ ॥ ॥

॥ अथ श्रीगुणरत्नकोशः॥

॥ श्रीमते रामानुजाय नमः॥ ॥श्रीपराश
रभट्टार्य्यः श्रीरंगेशपुरोहितः॥ श्रीवत्सांकसु

तः श्रीमान् श्रेयसे मेस्तु भूयसे ॥ १ ॥ श्रियै
समस्तचिदचिद्विधानव्यसनं हरेः ॥ अंगी
कारिभिरालोकैः सार्थयंत्यै कृतोंजलिः ॥२॥
उल्लासपल्लवितपालितसप्तलोकीनिर्वाहकोर
कितनेमकटाक्षलीलाम्॥ श्रीरंगहर्म्यतलमं
गलदीपरेखां श्रीरंगराजमहिषीं श्रियमाश्र
यामः॥३॥अनुकुलतनुकांडालिंगनारंभशुंभ
त्प्रतिदिशभुजशाखश्रीसखानोकहाद्भिः ॥स्त
ननयनगुलुच्छस्फारपुष्पाद्विरेफा रचयतु म-
यि लक्ष्मीः कल्पवल्लीकटाक्षान्॥४॥यद्भ्रूभं-
गाः प्रमाणं स्थिरचररचनातारतम्येमुरारेर्वे-
दांतास्तत्त्वचिंतां मुरभिदुरसि यत्पादचिन्है-
स्तरंति ॥ भोगोपोद्घातकेलीचुलुकितभग-
वद्वैश्वरूप्यानुभावा सा नः श्रीरास्तृणीताम-
मृतलहरिभिर्लंघनीयैरपांगैः ॥५॥यद्यावत्तव

वैभवं तदुचितस्तोत्राय दूरे स्पृहा स्तोतुं के
वयमित्यदश्च जगृहुःप्राञ्चोविरिंचादयः ॥अ-
प्येवं तव देवि वाङ्मनसयोर्भाषानभिज्ञं पदं
का वाचःप्रयतामहे कवयितुं स्वस्तिप्रशस्त्यै
गिराम् ॥ ६॥ स्तोतारं तमुशंति देवि कवयो
यो विस्तृणीते गुणान् स्तोतव्यश्च ततश्चते
स्तुतिधुरा मय्येव विश्राम्यति ॥यस्मादस्म-
दमर्षणीयभणितिस्वीकारतस्ते गुणाः क्षां-
त्यौदार्यदयादयो भगवति स्वां प्रस्तुवीरन् प्र
थाम्॥७॥सूक्तिं समग्रयतु नः स्वयमेव ल-
क्ष्मीः श्रीरंगराजमहिषी मधुरैः कटाक्षैः।वैद-
ग्ध्यवर्णगुणगुंफनगौरवय्यां कंडूलकर्णकु-
हराः कवयो धयंति॥८॥ अनाघ्रातावद्यंबहु-
गुणपरीणाहि मनसो दुहानं सौहार्दं परिचि-
तमिवाथापि गहनम्॥ पदानां सौभ्रात्रादनि-

मिषनिषेव्यं श्रवणयोस्त्वमेव श्रीर्मह्यं बहुमुखय वाणीविलसितम्॥ ९॥ श्रियः श्रीश्रीरंगेशय तव च हृद्यां भगवतीं श्रियं त्वत्तोप्युच्चैर्वयमिह भणामः शृणुतराम्॥ दृशौ ते भूयास्तां सुखतरलतारे श्रवणतः पुनर्हर्षोत्कर्षात् स्फुटतु भुजयोः कंचुकशतम्॥ १०॥ देवि श्रुतिं भगवति प्रथमे पुमांसस्त्वत्सद्गुणौघमणिकोशगृहं गृणंति॥ तद्द्वारपाटनपटूनि च सेतिह ससंतर्कणस्मृतिपुराणपुरःसराणि ॥ ११॥ आहुर्वेदानुमानं कतिचन कति चाराजकं विश्वमेतद्राजन्वत्केचिदीशं गुणिनमपि गुणैस्तं दरिद्राणमन्ये॥ भिक्षावन्ये सुराजं भवमिति च जडास्ते तलातल्यकार्षुरेते श्रीरंगहर्म्यांगणकनकलते नक्षणं लक्ष्यमासन्॥ १२ मनसि विलसिताक्ष्णा भक्तिसिद्धांजनेन श्रु-

तिशिरसि निगूढं लक्ष्मि ते वीक्षमाणाः॥ नि-
धिमिव महिमानं भुंजते येऽपि धन्या ननु भ-
गवति दैवीं संपदं तेऽभिजाताः॥१३॥अस्ये-
शाना जगत इति ते धीमहे यां समृद्धिं श्रीः
श्रीसूक्तं बहु मुखयते तां च शाखानुशाखम्॥
ईष्टे कश्चिज्जगतइति यः पौरुषे सूक्तउक्तस्तं
च त्वत्कं पतिमधिजगावुत्तरश्चानुवाकः॥१४
उद्बाहुस्त्वामुपनिषदसावाह नैकां नियंत्रीं
श्रीमद्रामायणमपि परं प्राणिति त्वच्चरित्रे॥
स्मर्तारोऽस्मज्जननि यतमे सेतिहासैःपुराणै-
र्निन्युर्वेदानपि च ततमे त्वन्महिम्नि प्रमाण-
म्॥१५॥आकुग्रामनियामकादपि विभोरा-
सर्वनिर्वाहकादैश्वर्यं यदिहोत्तरोत्तरगुणं श्री-
रंगभर्तुःप्रिये॥तुंगं मंगलमुज्ज्वलं गरिमवत्
पुण्यं पुनःपावनं धन्यं यत्तददश्च वीक्षणभुव-

स्ते पंचषा विप्रुषः॥ १६ ॥एकोमुक्तातपत्रप्रचुरमणिघणत्कारिमौलिर्मनुष्यो दृप्यद्दंतावलस्थो न गणयति नतान् यत् क्षणं क्षोणिपालान्॥यत्तस्मै तिष्ठतेऽन्यः कृपणमशरणो दर्शयन् दंतपंक्तिं तत्ते श्रीरंगराजप्रणयिनि नयनोदंचितन्यंचिताभ्याम् ॥ १७ ॥रतिर्मतिसरस्वतीधृतिसमृद्धिसिद्धिश्रियः सुधासखि यतोमुखं चिचलिषेत्तव भ्रूलता ॥ ततोमुखमथेंदिरे बहुमुखीमहंपूर्विकां विगाह्यचव शंवदाःपरिवहंति कूलंकषाः॥ १८॥सह स्थिरपवित्रसद्व्रजविरिञ्चिनाऽकिञ्चनैरनोकहबृहस्पतिप्रबलविप्लवप्रक्रमं॥ इदं सदसदात्मनां निखिलमेव निम्नोन्नतं कटाक्षतदुपेक्षयोस्तव हि लक्ष्मि तत्तांडवम्॥ १९॥काले शंसति योग्यतां चिदचितोरन्योन्यमालिंगतोर्भूता-

हंकृतिबुद्धिपंचकरणिस्वांतप्रवृत्तींद्रियैः ॥
अंडानावरणैः सहस्रमकरोत्तान् भूर्भुवःस्व
र्वंतः श्रीरंगेश्वरदेवि ते विहृतये संकल्पमानः
प्रियः २० शब्दादीन् विषयान् प्रदर्श्य विभवं
विस्मार्यदास्यात्मकं वैष्णव्या गुणमायया ऽऽ
त्मनिवहान् विप्लाव्य पूर्वःपुमान्॥ पुंसा पण्यव
धूविडंबिवपुषा धूर्त्तानिवाश्वासयन् श्रीरंगेश्व
रिकल्पते तव परीहासात्मने केलये॥ २१ ॥ य
द्दूरेमनसो यदेव तमसःपारे यदत्यद्भुतं यत्का
लादपचेलिमं सुरपुरी यद्गच्छतो दुर्गतिः ॥
सायुज्यस्य यदेव सूतिरथवा यद्दुर्गमंयाद्गिरां
तद्विष्णोः परमं पदं तव कृते मातः समाम्ना
सिषु॥ २२ ॥ हेलायामखिलं चराचरमिदं भो
गे विभूतिः परा पुण्यास्ते परिचारकर्मणि स
दा पश्यंति ये सूरयः॥ श्रीरंगेश्वरदेवि केवल

कृपानिर्वाह्यवर्गै वयं शेषित्वे परमः पुमान् परि
कराह्येते तवास्फालने॥ २३॥ आज्ञानुग्रहभी
मकोमलपुरीफालाफलं भेजुषांयायोध्येत्य
पराजितेति विदिता नाकंपरेणास्थिता॥ भावै
रद्भुतभोगभूमिगहनैः सांद्रैः सुधास्यंदिभिः
श्रीरंगेश्वरगेहलक्ष्मि युवयोस्तां राजधानीं
विदुः ॥ २४ ॥ तस्यांच त्वत्कृपावन्निरवधिज
नताविश्रमार्हविकाशं संकीर्णं दास्यतृष्णाक
लितपरिकरैः पुंभिरानंदनिघ्नैः ॥ स्नेहादास्था
नरक्षाव्यसनिभिरभयं शार्ङ्गचक्रासिमुख्यैरा
नंदैकार्णवं श्रीर्भगवति युवयोराह्वरास्थानर
त्नम्॥ २५ ॥ तत्र स्रक्स्पर्शगंधस्फुरदुपरिफ
णारत्नरोचिर्विंतानं विस्तीर्यानंतभोगं तदुप
रि नयताविश्वमेकातपत्रं॥ तैस्तैः कांतेन शां
तोदितगुणविभवैरर्हता त्वामसंख्यैरन्योऽन्या

द्वैतानिष्ठाघनरसगहनान् देवि बध्नासि भोगा
न् ॥ २६ ॥ भोग्या वामपि नांतरीयकतया पु
ष्पांगरागैःसमं निर्वृत्तः प्रणयातिवाहनविधौ
नीताः परीवाहतां ॥ देवि त्वामनु लीलया
सह महीदेव्यः सहस्रं तथा याभिस्त्वं स्तन
बाहुदृष्टिभिरिव स्वाभिप्रियं श्लाघसे ॥ २७ ॥
ते साध्याःसंति देवाजननि गुणवपुर्वेषवृत्तस्व
रूपैर्भोगैर्वा निर्विशेषाः सवयसइव ये नित्य
निर्दोषगंधाः ॥ हे श्रीः श्रीरंगभर्तुस्तवचपदप
रीचारवृत्त्यै सदापि प्रेमप्रद्राणभावाविलहृद
यहठात्कारकैंकर्य्यभोगाः ॥ २८ ॥ स्वरूपं
स्वातंत्र्यं भगवत इदं चंद्रवदने त्वदाश्लेषोत्क
र्षाद्भवति खलु निष्कर्षसमये॥त्वमासीमांतः
श्रीःकमितुरिदमित्थंत्वविभवस्तदंतर्भावात्त्वां
न पृथगभिधत्ते श्रुतिरपि ॥ २९ ॥ तवस्पर्शा

दीशं स्पृशति कमले मंगलपदं तवेदं नोपाधे
रुपनिपतितं श्रीरसि यतः॥ प्रसूनं पुष्यंतीम
पि परिमलर्द्धिं जिगादिषुर्नचैवं त्वां देवि स्वद
तइति कश्चित् कवयते॥ ३० ॥ अपांगा भूयां
सो यदुपरि परं ब्रह्म तदभूदमी यत्र द्वित्राः स
च शतमखादिस्तदधराक् ॥ अतः श्रीराम्नाय
स्तदुभयमुशंस्त्वां प्रणिजगौ प्रशस्तिः सारा
ज्ञोयदपि च पुरीकोशकथनम् ॥ ३१ ॥ स्वतः
श्रीस्त्वं विष्णोस्त्वमसि ततएवैष भगवांस्त्व
दायत्तर्द्धित्वेप्यभवदपराधीनविभवः ॥ स्वयां
दीप्त्या रत्नं भवदपि महर्घं न विगुणं न कुंठस्वा
तंत्र्यं भवति च न चान्याहितगुणम् ॥ ३२ ॥
प्रशाकनबलज्योतिर्ज्ञानैश्वरीविजयप्रथाप्रण
तवरणप्रेमक्षेमंकरत्वपुरःसराः ॥ अपिपरिम
लः कांतिर्लावण्यमर्चिरितींदिरे तव भगवत

श्चैते साधारणागुणराशयः ॥३३॥ अन्येऽपि यौवनमुखा युवयोः समानाः श्रीरंगमंगलवि जृंभणवैजयंति।तस्मिंस्तव त्वयिच तस्य पर स्परेण संस्तीर्णदर्पणइव प्रचुरं स्वदंते ३४॥ युवत्वादौ तुल्येऽप्यपरवशताशत्रुशमनास्थिर त्वादीन् कृत्वा भगवतिगुणान् पुंस्त्वसुलभान् ॥त्वयि स्त्रीत्वैकांतान् म्रदिमपतिपारार्थ्यकरु णाक्षमादीन्वाभोक्तुं भवति युवयोरात्मनि भि दा॥३५॥घनकनकद्युती युवदशामपि मुग्ध दशांयुवतरुणत्वयोरुचिरमाभरणादि परम्। ध्रुवमसमानदेशविनिवेशि विभज्य हरौ त्वम पि कुशेशयोदरविहारिणि निर्विशसि॥३६॥ अंगं ते मृदु शीतमुग्धमधुरोदारैर्गुणैर्गुंफतः क्षीराब्धेः किमु जीवतामुपगता मन्ये महार्घा स्ततः॥इंदुःकल्पलतासुधामधुमुखाइत्यावि

लां वर्णनां श्रीरंगेश्वरि शांतकृत्रिमकथं दिव्यं
वपुर्नार्हति ॥ ३७ ॥ प्रणमदनुविधित्सावास
नानम्रमग्रे प्रणतिपरिचिकीर्षाकुंचितं पार्श्व
केन। कनकनिकषचंचच्चंपकस्रक्समानंप्रव
रमिदमुदारं वर्ष्म वाचामभूमिः॥ ३८ ॥एकं
न्यंच्य नतिक्षमं किमपरं चाकुंच्य पादांबुजं
मध्ये विष्टरपुंडरीकमभयं विन्यस्यहस्तांबुज
म्।त्वां पश्येम निषेदुषीं प्रतिकलं कारुण्यकू
लंकषस्फारापांगतरंगमंबमधुरंमुग्धं मुखंबि
भ्रतीम्॥ ३९ ॥सुरभितनिगमांतं वंदिषीयेंदि
रायास्तव कमलपलाशप्रक्रियं पादयुग्मम्।
वहति यदुपमर्दैर्वैजयंतीहिमांभःस्नुतिभिरिव
नवत्वं कांतबाह्वंतराले॥ ४० ॥त्वत्स्वीकारक
लावलेपकलुषाराज्ञां दृशो दुर्वचोनित्यं त्वन्म
धुपानमत्तमधुपश्रीनिर्भराभ्यां पतिम् ॥ ६

गभ्यामेव हि पुंडरीकनयनं वेदो विदामास ते साक्षाल्लक्ष्मि तवावलोकविभवः काक्का कया वर्ण्यते ॥ ४१ ॥ आनंदात्मभिरीशमज्जनमदक्षीबालसैरागलत्प्रेमार्द्रैरपि कूलमुद्वह कृपासंप्लावितास्माद्दशैः ॥ पद्मे ते प्रतिबिंदुबद्धकलितब्रह्मादिविष्कंभकैरैश्वर्योद्गमगद्गदैरशरणं मां पालयालोकितैः॥४२॥पादारुंतुदमेव पंकजरजश्चेटीभृशालोकितैरंगम्लानिरथांबसाहसविधौलीलारविंदग्रहः ॥ दोला ते वनमालया हरिभुजे हा कष्टशब्दास्पदं केन श्रीरतिकोमला तनुरियं वाचां विमर्दक्षमा ॥४३॥आमर्यादमकंटकं स्तनयुगं नाद्यापि नालोकितं भ्रूभेदस्मितविभ्रमा जहति वा नैसर्गिकत्वाद्यशः॥सूते शैशवयौवनव्यतिकरो गात्रेषु ते सौरभं भोगस्त्रोतसि कांतदेशिकक

रग्राहेण गाहक्षमः॥ ४४॥आमोदाद्भुतशालि यौवनदशाव्याकोचमम्लानिमत्सौंदर्यामृत सेकशीतलमिदं लावण्यसूत्रार्पितम् ॥ श्रीरंगेश्वरि कोमलांगसुमनस्संदर्भणं देवि ते कांतोरःप्रतियत्नमर्हति कविं धिङ्मामकांडाकुलम् ॥ ४५ ॥ मर्मस्पृशोरसि शिराव्यतिविद्धवृत्तैःकांतोपभोगललितैर्लुलितांगयष्टिः ॥पुष्पावलीव रसिका भ्रमरोपभुक्तात्वंदेवि नित्यमभिनंदयसे मुकुंदं॥ ४६ ॥कनकरसनामुक्ताताटंकहारललाटिका मणिसरतुलाकोटिप्रायैर्जनार्दनजीविके ॥ प्रकृतिमधुरं गात्रं जागर्तिमुग्धविभूषणैर्वलयशकलैर्दुग्धं पुष्पैश्च कल्पलतायथा ॥४७॥ सामान्यभोग्यमपि कौस्तुभवैजयंतीपंचायुधानि रमणः स्वयमेव बिभ्रत्॥तद्धारखेदमिव ते परिहर्तुकामःश्रीरं

गधामममणिमंजरि गाहते त्वां॥४८॥यदि म
नुजतिरश्चां लीलया तुल्यवृत्तेरनुजनुरनुरू
पा देवि नावातरिष्यः॥ असरसमभविष्यन्न
र्म नाथस्य मातर्दरदलदरविंदोदन्तकान्ता
यताक्षी॥ ४९ ॥स्खलितकटकमाल्यैर्दोर्भिर
ब्धि मुरारेर्भगवति दधिमाथं मथ्नतः श्रांतशां
त्यै॥भ्रमदमृततरंगावर्ततः प्रादुरासीः स्मि
तनयनसुधाभिः सिंचती चंद्रिकेव॥५०॥मा
तर्मैथिलि राक्षसीस्त्वयि तथैवार्द्रापराधास्त्व
या रक्षंत्या पवनात्मजाल्लघुतरारामस्यगोष्ठी
कृता॥काकं तं च बिभीषणं शरणमित्युक्तिक्ष
मौ रक्षतः सा नः सांद्रकृतागसः सुखयतु क्षां
तिस्तथाकस्मिकी ॥५१ ॥ पितेव त्वत्प्रेयान्
जननि परिपूर्णागसि जने हितः स्रोतोवृत्त्या
भवति च कदाचित् कलुषधीः ॥ किमेतन्नि

दोषः क इह जगतीति त्वमुचितैरुपायैर्विस्मार्य स्वजनयसि माता तदसि नः॥५२॥ मातर्लक्ष्मि यथैव मैथिलजनस्तेनाध्वना ते वयं त्वद्दास्यैकरसाभिमानसुभगैर्भावैरिहामुत्र च। जामाता दयितस्तवेति भवतीसंबंधदृष्ट्या हरिं पश्येम प्रतियाम याम च परीचारान् प्रहृषम च॥५३॥नेतुर्नित्यसहायिनी जननि न स्त्रातुं त्वमत्रागता लोके त्वन्महिमावबोधबधिरे प्राप्ता विमर्दं बहु॥क्लिष्टं ग्रावसु मालती मृदुपदं विश्लिष्य वासो वने जातो धिक्करुणां धिगस्तु युवयोः स्वातंत्र्यमत्यंकुशम्॥५४॥ अधिशायितवानब्धिं नाथो ममंथ बबंध तं हर धनुरसौ वल्लीभंजं बभंज च मैथिलि ।। अपि दशमुखं लूत्वा रक्षःकबंधमनर्त्तयत् किमिव नपतिः कर्त्तात्वच्चाटुचंचुमनोरथः ॥५५॥ द

शशतपाणिपादवदनाक्षिमुखैरखिलैरपि नि
जवैश्वरूप्यविभवैरनुरूपगुणैः ॥ अवतरणैर
तैश्च रसयन् कमिता कमले क्व च नहि विभ्र
मभ्रमिमुखे विनिमज्जति ते॥ ५६ ॥जननभ
वनप्रीत्या दुग्धार्णवं बहु मन्यसे जननि द
यितप्रेम्णा पुष्णासि तत्परमं पदम् ॥उदधि
परमव्योम्नोर्विस्मृत्य मादृशरक्षणं क्षममिति
धिया भूयः श्रीरंगधामनि मोदसे ॥ ५७ ॥
औदार्यकारुणिकताश्रितवत्सलत्वं पूर्वेषु स
र्वमतिशायितमत्र मातः॥श्रीरंगधाम्नि यदुता
न्यदुदाहरंति सीतावतारमुखमेतदमुष्य यो
ग्यम् ॥५८॥ ऐश्वर्यमक्षरगतिं परमं पदं वा
कस्मैचिदंजलिभरं वहते वितीर्य ॥ अस्मै न
किंचिदुचितं कृतमित्यथांब त्वं लज्जसे कथय
कोयमुदारभावः ॥५९॥ ज्ञानक्रियाभजनसं

पदाकिंचनोऽहमिच्छाधिकारशकनानुशयान
भिज्ञः॥आगांसि देवि युवयोरपि दुःसहानि
बध्नामि मूर्खचरितस्तवदुर्भरोस्मि॥ ६० ॥इ
त्युक्तिकैतवशतेन विडंबयामि तानंब सत्यव
चसः पुरुषान् पुराणान् ॥ यद्वा न मे भुजबलं
तव पादपद्मलाभे त्वमेव शरणं विधितः कृतो
स्मि॥६१॥श्रीरंगे शरदां शतं सहसुहृद्वर्गेण
निष्कंटकं निर्दुःखं सुसुखं च दास्यरसिकांक्ष
त्वा समृद्धिं परां ॥ युष्मत्पादसरोरुहांतररता
स्स्याम त्वमंबापिता सर्वंचत्वमपित्वमेव भव
तः स्वीकुर्वकस्मात्कृपां।६२।इतिश्रीसुदर्शन
भट्टारकैर्विरचितं श्रीगुणरत्नकोश० स० २४

## श्रीयतिराजसप्ततिः

॥ श्रीमते रामानुजाय नमः॥ श्रीमान्वेंकट

नाथार्य्यः कवितार्किककेसरी ॥ वेदांताचार्य वर्यो मे सन्निधत्तां सदा हृदि ॥१॥कमप्याद्यं गुरुं वंदे कमलागृहमेधिनम् ॥ प्रवक्ताछंदसां वक्ता पंचरात्रस्य यः स्वयम् ॥ २ ॥ सहधर्म चरीं शौरेः सन्मंत्रितजगद्धितां ॥ अनुग्रहम यीं वंदे नित्यमज्ञातनिग्रहाम्॥३॥वंदे वैकुंठ सेनान्यं देवं सूत्रवतीसखम् ॥ यद्वेत्रशिखर स्पंदे विश्वमेतद्व्यवस्थितम् ॥ ४॥ यस्य सा रस्वतं स्रोतो बकुलामोदवासितम्॥श्रुतीनां विश्रमायाऽलं शठारिं तमुपास्महे ॥५ ॥ ना थेन मुनिनाथेन भवेयं नाथवानहम् ॥ यस्य नैगमिकं तत्त्वं हस्तामलकतां ययौ ॥६॥न मस्याम्यरविंदाक्षं नाथभावे व्यवस्थितम् ॥ शुद्धसत्वमयं शौरेरवतारमिवापरम्॥ ७ ॥ अनुज्झितक्षमायोगमपुण्यजनबाधकम्॥अ

स्पृष्टमदरागं तं रामं तुर्यमुपास्महे ॥ ८॥ वि
गाहे यामुनं तीर्थं साधुवृंदावने स्थितम्॥ नि
रस्तजिह्मगस्पर्शे यत्र कृष्णःकृतादरः ९॥द
यानिघ्नं यतींद्रस्य देशिकं पूर्णमाश्रये।येन वि
श्वसृजो विष्णोरपूर्यत मनोरथः॥१०॥प्रणा
मंलक्ष्मणमुनिः प्रतिगृण्हातु मामकम्॥प्रसा
धयति यत्सूक्तिःस्वाधीनपतिकां श्रुतिम्११
उपवीतिनमूर्ध्वपुंड्रवंतं त्रिजगत्पुण्यफलं त्रि
दंडहस्तम् ॥ शरणागतसार्थवाहमीडे शिख
या शेखरिणं पतिं यतीनाम् ॥ १२ ॥ प्रथय
न् विमतेषु तीक्ष्णभावं प्रभुरस्मत्परिरक्षणे
यतींद्रः ॥ अपृथक्प्रतिपन्नयन्मयत्वैर्ववृधेपंच
भिरायुधैर्मुरारेः॥१३ ॥शमितोदयशंकरादि
गर्वः स्वबलादुद्धृतयादवप्रकाशः ॥ अवरोपि
तवान् श्रुतेरपार्थान्ननुरामावरजः स एष भूयः

॥१४॥अबहुश्रुतसंमतं श्रुतीनां जरतीनाम
यथायथप्रचारम्॥ विनिवर्तयितुं यतीश्वरो
क्तिर्विदधे ताः स्थिरनीतिपंजरस्थाः॥ १५ ॥
अमुना तपनातिशायिभूम्ना यतिराजेन निब
द्धनायकश्रीः ॥ महती गुरुपंक्तिहारयष्टिर्विबु
धानां हृदयंगमा विभाति ॥१६॥ अलूनपक्ष
स्य यतिक्षमाभृतो विभाति वंशे हरितत्त्वमक्ष
तम्॥ यदुद्भवाः शुद्धसुवृत्तशीतला भवंति मु
क्तावलिभूषणं भुवः ॥ १७ ॥ अनपायिविष्णु
पदसंश्रयं भजे कलया कया विकलयाप्यनु
ज्झितम्॥अकलंकयोगमजडाशयोदयं यति
राजचंद्रमुपरागदूरगम् ॥ १८॥ अधिगम्य
सम्यगनघाः सुमेधसो यतिचक्रवर्त्तिपदपद्म
पत्तनम्॥हरिभक्तिदास्यरसिकाः परस्परं क्र
यविक्रयार्हदशयासमिंधते ॥१९॥ परुषाति

वादपरवादिपैशुनप्रभृतिप्रभूतयतनीयपंकि
ला॥ स्वदते ममाद्य सुभगा सरस्वती यति
राजकीर्तिकतकैर्विशोधिता॥२०॥अनुकल्प
भूतमुरभित्पदं सतामजहात्त्रिवर्गमपवर्गवैभ
वम्॥चलच्चित्तवृत्तिविनिवर्तनौषधं शरणं य
तींद्रचरणं वृणीमहे॥२१॥श्वसितावधूतपर
वादिवैभवा निगमांतनीतिजलधेस्तलस्पृशः
॥ प्रतिपादयंति गतिमापवर्गिकीं यतिसार्व
भौमपदसात्कृताशयाः॥२२॥ मूले निवेश्य
महतां निगमद्रुमाणां मुष्णन्प्रतारकभयं धू
तनैकदंडः ॥ रंगेशभक्तजनमानसराजहंसो
रामानुजःशरणमस्तु मुनिः स्वयं नः॥२३॥
सन्मंत्रवित् क्षिपति संयमिनां नरेंद्रः संसार
जिह्मगमुखैः समुपस्थितं नः॥ विष्वक्तंत वि
षयलोभविषं निजाभिर्गाढानुभावगरुडध्वज

भावनाभिः ॥ २४॥नाथःस एष यमिनां नख रश्मिजालैरंतर्निलीनमपनीय तमो मदीयं॥ विज्ञानचित्रमनघं लिखतीव चित्ते व्याख्या नकेलिरसिकेन करांबुजेन॥२५॥उद्घृण्हती मुपनिषत्सु निगूढमर्थं चित्ते निवेशयितुमल्प धियां स्वयं नः ॥पश्येम लक्ष्मणमुनेःप्रतिप न्नहस्तामुन्निद्रपद्मसुभगामुपदेशमुद्रां ।२६॥ आकर्षणानि निगमांतसरस्वतीनामुच्चाटना नि बहिरंतरुपप्लवानाम् ॥ पथ्यानि घोरभव संज्वरपीडितानां हृद्यानि भांति यतिराजमु नेर्वचांसि ॥ २७ ॥शीतस्वभावसुभगानुभवः शिखावान् दोषावमर्दनियतोन्नतिरोषधीशः॥ तापानुबंधशमनस्तपनः प्रजानां रामानुजो जयति संवलितत्रिधामा॥२८॥जयति सक लविद्यावाहिनीजन्मशैलो जनिपथपरिवृत्ति

श्रांतविश्रांतिशाखी ॥ निखिलकुमतिमायाश
र्वरीबालसूर्य्यो निगमजलधिवेलापूर्णचंद्रो य
तींद्रः ॥ २९ ॥ मुनिबहुमतसारा मुक्तिनिःश्रे
णिकेयं सहृदयहृदयानां शाश्वती दृष्टिसिद्धिः
॥ शमितविमतखेदा संयमींद्रस्य सूक्तिःपरि
चितगहना नःप्रस्तुवीत प्रसादं ॥ ३० ॥ भवम
रुपरिखिन्नस्फीतपानीयसिद्धिर्दुरितरहितजि
ह्वादुग्धकुल्यासकुल्या ॥ श्रुतिनयनसनाभिः
शोभते लक्ष्मणोक्तिर्नरकमथनसेवास्वादना
डिंधमा नः ३१ हरिपदमकरंदस्यंदिनः संश्रि
तानामनुगतबहुशाखास्तापमुन्मूलयंति ॥ श
मितदुरितगंधाः संयमींद्रप्रबंधाः कथकजन
मनीषाकल्पनाकल्पवृक्षाः ॥ ३२ ॥ नानाभूतैर्ज
गति समयैर्नर्मलीलां विधित्सोरंत्यं वर्णं प्रथ
यतिविभोरादिमव्यूहभेदैः ॥ विश्वं त्रातुं विन

यनिभृतं व्यंजितानुग्रहः सन्विष्वक्सेनो य
तिपतिरभूद्वेदसारात्रिदण्डः ॥ ३३ ॥ लक्ष्यं बु
द्धेर्ललितरसनालास्यलीलानिदानंशुद्धास्वा
दं किमपि जगति श्रोत्रदिव्यौषधं नः ॥ लक्ष्या
लक्ष्यैः सितजलधिवद्धातितात्पर्यरत्नैर्लक्ष्मी
कांतस्फटिकमुकुरो लक्ष्मणार्योपदेशः ॥ ३४
स्थितिमवधीरयंति च मनोरथसिद्धिमतीं य
तिपतिसंप्रदायनिरपायधनोपचिताः । मधुक
रमौलिदघ्नमददंतुरदंतिघटा करटकटाहवा
हघनसीकरशेखरिताम् ॥ ३५ ॥ अनुपधिरंग
वृत्तिरसिकानभिताण्डवयन्निगमविमर्शकेलि
निरतैर्निभृतैर्विधृतः ॥ गुणपरिणद्धसूक्तिदृढ
कोणविघट्टनया रटति दिशां मुखेषु यतिराज
यशःपटहः ॥ ३६ ॥ इदं प्रथमसंभवत्कुमतिजा
लकूलंकषा मृषामतविषानलग्लपितजीव

जीवातवः॥ क्षरंत्यमृतमक्षरं यतिपुरंदरस्योक्तयश्चिरंतनसरस्वतीचिकुरबंधसैरंध्रिकाः ॥ ३७॥ सुधाशनसुदुर्ग्रहश्रुतिसमष्टिमुष्टिंधयः कथाहवमसौ गतान् कपटसौगतान् खंडयन्॥मुनिर्मनसि लक्ष्मणोमुदमुदंचयत्यंजसा मुकुंद गुणमौक्तिकप्रवरशुक्तिभिः सूक्तिभिः ॥ ३८॥ कपर्दिमतकर्दमं कपिलकल्पनावागुरां दुरत्ययमतीत्य तद् द्रुहिणतंत्रयंत्रोदरं॥ कुदृष्टिकुहनामुखे निपततः परब्रह्मणः करग्रहविचक्षणोजयति लक्ष्मणोयं मुनिः॥३९॥कणादपरिपाटिभिः कपिलकल्पनानाटकैः कुमारिलकुभाषितैर्गुरुनिबंधनग्रंथिभिः ॥ तथागतकथाशतैस्तदनुसारिजल्पैरपि प्रतारितमिदं जगत्प्रगुणितं यतींद्रोक्तिभिः ॥४०॥ कथाकलहकौतुकग्रहगृहीतकौ

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तस्कुतग्रथाजलधिसंप्लवग्रसनकुंभसंभूतयः
॥ जयंति सुधियो यतिक्षितिभृदन्तिकोपास
नप्रभावपरिपक्किमप्रमितभारतीसंपदः ४१ ॥
यतीश्वर सरस्वतीसुरभिताशयानां सतां व
हामिच्चरणांबुजं प्रणतिशालिना मौलिना ॥
तदन्यमतदुर्मदज्वलितचेतसां वादिनां शि
रस्सु निहितं मया पदमदक्षिणं लक्षताम्॥
॥ ४२ ॥ भजस्व यतिभूपतेरनिदमादिदुर्वा
सनाकदध्वपरिवर्त्तनश्रमनिवर्तिनीं वर्तनी
म्॥ लभस्व हृदय स्वयं रथपदायुधानुग्रहद्रु
तप्रहतिनिस्त्रुटद्दुरितदुर्वृतिं निर्वृतिम् ४३॥
कुमतिविहितग्रंथग्रंथिप्रभूतमतान्तरद्रुहिल
मनसः पश्यंत्यल्पां यतीश्वरभारतीम्॥ वि
कटमुरभिद्वक्षःपीठीपरिष्करणोचितः कुल
गिरितुलारोहेभावी कियानिव कौस्तुभः ४४

स्थविरनिगमस्तोमस्थेयां यतीश्वरभारतीं
कुमतिभणितिक्षोभक्षीबाःक्षिपंतु भजंतु वा॥
रसपरिमलश्लाघाघोषस्फुटत्पुटभेदनं लवण
वणिजः कर्पूरार्घं किमित्यभिमन्वते ॥ ४५॥
वहति महिलामाद्यो वेधास्त्रयीमुखरैर्मुखैर्वर
तनुतया वामोभागःशिवस्य विवर्त्तते॥तदपि
परमं तत्त्वं गोपीजनस्य वशंवदं मदनकदनै
र्न क्लिश्यंते यतीश्वरसंश्रयाः॥ ४६॥निगमप
थिकच्छायाशाखी निराशमहानिधिर्मंहितवि
विधच्छात्रश्रेणीमनोरथसारथिः॥ त्रिभुवनत
मःप्रत्यूषोयं त्रिविद्यशिखामणिर्यतिपरिवृढो
रक्षायंत्रं रमापतिसंपदाम् ॥ ४७॥ जडमति
मुधादंतादंतिव्यथौषधिसिद्धयःप्रमितिनिध
यःप्रज्ञाशालिप्रपालनयष्टयः॥श्रुतिसुरभयः
शुद्धानन्दाभिवर्षुकवारिदा यमगतिकथावि

च्छेदिन्योयतीश्वरसूक्तयः ॥ ४८॥ प्रतिकल
मिह प्रत्यक्तत्त्वावलोकनदीपिकां यतिपरिवृ
ढग्रंथाश्विता निरंतरयंतु नः ॥ अकलुषपरि
ज्ञानौत्सुक्यक्षुधातुरदुर्दशः परिणतकलप्र
त्यासीदत्फलेग्रहिसुग्रहाः ४९॥ मुकुंदांघ्रिश्र
द्धाकुमुदवनचंद्रातपनिभामुमुक्षामक्षोभ्यां
ददति मुनिवृंदारकगिरः ॥ स्वसिद्धांतध्वांत
स्थिरकुतुकदुर्वादिपरिषद्दिवाभीतप्रेक्षादि
नकरसमुत्थानपरुषाः॥५०॥निराबाधाबोधाय
नभणितिनिष्यंदसुभगा विशुद्धोपन्यासव्य
तिभिदुरशारीरकनयाः॥अकुंठैः कल्पंते य
तिपतिनिबन्धानिजमुखैरनिद्राणप्रज्ञारसध
मनिबोधाय सुधियाम् ॥ ५१ ॥ विकल्पा
टोपेन श्रुतिपथमशेषं विघटयन् यदृच्छानि
र्दिष्टे यतिनृपतिशब्दे विरमति॥वितंडाहंकुर्व

त्प्रतिकथककवेतंडपूतनाविघातव्यापारव्यति
भिदुरसंरंभकलहः ॥ ५२ ॥प्रतिष्ठा तर्काणां
प्रतिपदमृचांधाम यजुषां परिष्कारः साम्नां
परिपणमथर्वांगिरसयोः ॥प्रदीपस्तत्त्वानां प्र
तिकृतिरसौतापसगिरां प्रसत्तिः संवित्तेः प्रदि
शतु यतीशानभणितिः ५३हतावद्ये हृद्ये हरि
चरणपंकेरुहयुगेनिबध्नंत्यैकांत्यंकिमपियति
भूभृद्भणितयः ॥ शुनासीरस्कंदद्रुहिणहरहेरं
बहुतभुक्प्रभेशादिक्षुद्रप्रणातिपरिहारप्रतिभु
वः ॥ ५४ ॥यथाभूतस्वार्था यतिनृपतिसूक्ति
र्विजयते सुधासंदोहात्मा सुचरितविपक्तिः श्रु
तिमतां॥कथादप्यत्कौतस्कुतकलहकोलाह
लहतत्रिवेदीनिर्वेदप्रशमनविनोदप्रणयिनी
॥ ५५ ॥श्रुतिश्रेणीचूडापदबहुमते लक्ष्मण
मते स्वपक्षस्थान् दोषान् वितथमितरोरोपय

तियः ॥ स्वहस्तेनोत्क्षिप्तैः स खलु निजगात्रे षुबहुलंगलद्भिर्जैबालैर्गगनतलमालिंपति जडः ॥५५॥ निरालोके लोके निरवधिपरस्नेह भरितो यतिक्ष्माभृद्दीपो यदि न खलु जाज्व ल्यत इह ॥ अहंकारध्वांतं विजहतु कथंकारम नघाःकुतर्कव्यालौघं कुमतिमतपातालकुह रम् ॥५६॥ यतिक्ष्माभृद्दृष्टं मतमिह नवीनं तद पि किं ततः प्रागेवान्यद्वद तदपि किं वर्णनि कषे ॥ निशाम्यन्तां यद्वा निजमततिरस्कार विगमान्निरातङ्काटङ्कद्रविडगुहदेवप्रभृतयः ॥ ॥ ५७ ॥ सुधासारं श्रीमद्यतिवरभुवः श्रोत्र कुहरे निषिंचंत्यन्यंचन्निगमगरिमाणोभणित यः ॥ यदास्वादाभ्यासप्रचयमहिमोल्लासित धियां सदा स्वाद्यं काले तदमृतमनंतं सुमनं साम् ॥५८॥ यतिक्षोणीभर्तुर्यदिदमनिदंभो

गजनिता शिरःश्रेणीजुष्टं तदिह दृढबंधं प्रभ
वति ॥ अविद्यारण्यानीकुहरविहरन्मामकम
नःप्रमाद्यन्मातंगप्रथमनिगलं पादयुगलम्
५९ सवित्री मुक्तानां सकलजगदेनःप्रशमनी
गरीयोभिस्तीर्थैरुपचिततरसा यामुनमुखैः ॥
निरुच्छेदा निम्नेतरमपि समाप्लावयति मांय
दृच्छाविक्षेपाद्यतिपतिदयादिव्यतटिनी ६०
च्चिताशेषदुरर्थदंतुरवचःकंथाशतग्रंथिलाःसि
द्धान्ता न समिंधते यतिपतिग्रंथानुसंधात
रि ॥ मुक्ताशुक्तिविशुद्धसिद्धतटिनीचूडालचू
डापदः किं कुल्यां कलयेत खंडपरशुर्मण्डूक
मंजूषिकाम् ६१ वंदे तं यमिनां धुरंधरमहं मा
नांधकारद्रुहं पंथानं परिपंथिनां निजदृशा रुं
धानमिंधानया॥ दत्तं येन दयासुधांबुनिधिना
पीत्वा विशुद्धं पयः काले नः करिशैलकृष्णज

लदः कांक्षाधिकं वर्षति ॥६२॥काषायेण गृहीतपीतवसना दंडैस्त्रिभिर्मंडिता सा मूर्तिर्मुरमर्द्दनस्य जयति त्रय्यंतसंरक्षिणी ॥ यत्प्रख्यापिततीर्थवार्द्धितधियामभ्यस्यतां यद्गुणा नासिंधोरानिदंप्रदेशानियता कीर्तिः प्रजागर्ति नः ॥ ६३ ॥ लिप्से लक्ष्मणयोगिनः पदयुगं रथ्यापरागच्छटारक्षारोपणधन्यसूरिपरिषत्सीमंतसीमांतिकम्॥भिक्षापर्यटनक्षणेषु बिभरांचक्रे गलत्किल्बिषा यद्विन्यासमिषेण पत्रमकरीमुद्रां समुद्रांबरा ॥६४॥नानातंत्रविलोभितेन मनसा निर्णीतदुर्नीतिभिः कष्टं कुत्सितदृष्टिभिर्यतिपतेरादेशवैदेशिकैः ॥ व्यासो हासपदीकृतः परिहृतः प्राचेतसश्चेतसः कृतः केलिशुकः शुकः सचमुधाबाधाय बोधायनः॥६५॥अर्थ्या तिष्ठति मामिका मतिर

सावाजन्मराजन्वती पत्या संयमिनामनेन
जगता मत्याहितच्छेदिना ॥ यत्सारस्वतदु
ग्धसागरसुधासिद्धौषधास्वादिनां प्रस्वापाय
न बोभवीति भगवन्मायामहायामिनी॥६६॥
शुद्धादेशवशंवदीकृतयतिक्षोणीशवाणीशतप्र
त्यादिष्टबहिर्गतिः श्रुतिशिरःप्रासादमासीद
ति ॥दुग्धोदन्वदपत्यसान्निधिसुधासामोददा
मोदरश्लक्ष्णालोकनदौर्ललित्यजानितोन्मे
षान्नीषा मम।६७॥आस्तां नाम यतीन्द्रपद्ध
तिजुषामाजन्मशुद्धा मतिस्तच्चाव्याजविशु
द्धमुग्धमधुरं सारस्वतं शाश्वतम्॥कोवा चक्षु
रुदंचयेदपि पुरःसाटोपतर्कच्छटाशस्त्राशास्त्रि
विहारसंभृतरणास्वादेषु वादेषु नः ॥६८॥प
र्यस्तं पर्यचैषं कणचरणकथामाक्षपादं शिशि
क्षे मीमांसामांसलात्मा समजनिषि मुहुः सां

ख्ययोगौ समाख्यौ ॥ इत्थंतैस्तैर्यतींद्रत्रुटि
तबहुमृषातंत्रकांतारपांथैरंतमौंहक्षपांथैरहह
किमिह नश्चिंतनीयं तनीयः ॥ ६९ ॥ गाथा
ताथागतानां गलति गमनिका कापिली का
पिलीनाक्षीणाकाणादवाणी द्रुहिणहरगिरः
सौरभं नारभंते ॥ क्षामा कौमारिलोक्तिर्जग
ति गुरुमतं गौरवाद्दूरवांतं का शंका शंकरादे
र्भजति यतिपतौ भद्रवेदीं त्रिवेदीम् ॥ ७० ॥
विष्वग्व्यापिन्यगाधे यतिनृपतियशःसंपदे
कार्णवेस्मिन् श्रद्धाशुद्धावगाहैःशुभमतिभिर
सौ वेंकटेशोभिषिक्तः ॥ प्रज्ञादौर्जन्यगर्जत्त्र
तिकथकवचःस्थूलवातूलवृत्त्या सप्तत्या सा
रवत्या समतनुत सतां प्रीतिमेतां समेता
म् ॥ ७१ ॥ आशामतंगजगणानविषह्यवेगा
न्पादे यतिक्षितिभृतः प्रसभं निरुन्धन् ॥ का

र्यैःकथाहवकुतूहलिभिः परेषां कर्णे स एष कवितार्किकसिंहनादः ॥ ७२ ॥ उपशमितकुदृष्टिविप्लवानां श्रुतिशिरसामुपचारदीपिकेयम् ॥ कवलितभगवद्विभूतियुग्मां दिशतु मतिं यतिराजसप्ततिर्नः ॥७३॥ करतलामलकीकृतसत्पथाः श्रुतिवतंसितसूनृतसूक्तयः ॥ दिवि सतारकयंति समत्सरान्यतिपुरंदरसप्ततिसादराः ॥७४॥ इति श्रीयतिराजसप्ततिःसंपूर्णा ॥ २५ ॥ ॥छ॥ ॥

## ॥ श्रीवेंकटेशसुप्रभातम् ॥

श्रीमते रामानुजाय नमः। कौशल्या सुप्रजा राम पूर्वा संध्या प्रवर्त्तते ॥उत्तिष्ठ नरशार्दूल कर्त्तव्यं दैवमान्हिकम् ॥१॥ उत्तिष्ठोत्तिष्ठगोविंद उत्तिष्ठ गरुडध्वज॥उत्तिष्ठ कमलाकांत

त्रिलोक्या मंगलं कुरु ॥२॥ मातः समस्तज
गतां मधुकैटभारेर्वक्षोविहारिणि मनोहरदि
व्यरूपे ॥श्रीस्वामिनि श्रितजनप्रियदानशी
ले श्रीवेंकटेशदयिते तव सुप्रभातम्॥ ३ ॥ त
व सुप्रभातमरविंदलोचने भवतु प्रसन्नमुखचं
द्रमंडले ॥ विधिशंकरेंद्रवनिताभिरर्चिते वृष
शैलनाथदयिते दयानिधे ॥ ४ ॥ अत्र्यादिस
प्तऋषयस्समुपास्य संध्यामाकाशसिंधुकम
लानि मनोहराणि ॥ आदाय पादयुगमर्चयि
तुं प्रपन्नाः शेषाद्रिशेखरविभो तव सुप्रभातम्
॥ ५॥ पञ्चाननाब्जभवषण्मुखवासवाद्यास्त्रैवि
क्रमादिचरितं विबुधाः स्तुवंति ॥ भाषापतिः
पठति वासरशुद्धिमारात् शेषाद्रिशेखरविभो
तव सुप्रभातम् ॥ ६ ॥ ईषत्प्रफुल्लसरसीरुह
नारिकेलपूगद्रुमादिसुमनोहरपालिकानाम्

॥ आवाति मंदमनिलः सह दिव्यगंधैः शेषा
द्रिशेखरविभो तव सुप्रभातम् ॥ ७॥ उन्मी
ल्य नेत्रयुगमुत्तमपंजरस्थाः पात्रावशिष्टकद
लीफलपायसानि ॥ भुक्त्वा सलीलमथ केलि
शुकाःपठंति शेषाद्रिशेखरविभो तव सुप्रभा
तम् ॥ ८ ॥ तंत्रीप्रकर्षमधुरस्वनया विपंच्या
गायत्यनंतचरितं तव नारदोपि ॥ भाषासम
ग्रमधृकृत्करचारुरम्याच्छेषाद्रिशेखरविभोत
व सुप्रभातम् ॥ ९॥ भृंगावली च मकरंदर
सानुविद्धझंकारगीतनिनदैः सह सेवनाय ॥
निर्यात्युपांतसरसीकमलोदरेभ्यः शेषाद्रिशे
खरविभो तव सुप्रभातम् ॥ १० ॥ योषागणे
न वरदध्नि विमथ्यमाने घोषालयेषु दधिमंथ
नतीव्रघोषाः॥रोषात्कलिं विदधति ककुभश्च
कुंभाः शेषाद्रिशेखरविभो तव सुप्रभातम् ॥

॥ ११ ॥ पद्मेशमित्रशतपत्रकृतालिवर्गा हर्तुं
श्रियं कुवलयस्य सितारुणांगाः॥ भेरीनिना
दमिव बिभ्रति तीव्रघोषं शेषाद्रिशेखर विभो
तव सुप्रभातम्॥१२॥ श्रीमन्नभीष्टवरदाखि
ललोकबंधो श्रीश्रीनिवास जगदेकदयैकसिं
धो॥श्रीदेवतागृहभुजांतरदिव्यमूर्त्ते श्रीवेंक
टाचलपते तव सुप्रभातम्॥ १३ ॥श्रीशेषशै
लगरुडाचलवेंकटाद्रिनारायणाद्रिवृषभाद्रि
वृषाद्रिमुख्यान्॥आख्यां तवादिवसतेरनिशं
वदंति श्रीवेंकटाचलपते तव सुप्रभातं१४॥
श्रीस्वामिपुष्करिणिकाप्लवनिर्मलांगाःश्रेयो
र्थिनो हरविरिंचिसनंदनाद्याः ॥द्वारे वसंति व
रवेत्रहतोत्तमांगाःश्रीवेंकटाचलपते तव सुप्र
भातम्॥१५॥ सेवापराः शिवसुरेशकृशानुध
र्मरक्षोंबुनाथपवमानधनाधिनाथाः ॥ बद्धांज

लिप्रविलसन्निजशीर्षदेशाः श्रीवेंकटाचलप
ते तव सुप्रभातं १६ घाटीषुतेविहगराजमृगा
धिराजनागाधिराजगजराजहयाधिराजाः ॥
स्वस्वाधिकारमहिमाधिकमर्चयंति श्रीवेंकटा
चलपते तव सुप्रभातम् ॥ १७ ॥ सूर्येन्दुभौ
मबुधवाक्पतिकाव्यसौरिस्वर्भानुकेतुदिविष
त्परिषत्प्रधानाः ॥ त्वद्दासदासचरमावधिदा
सदासाः श्रीवेंकटाचलपते तव सुप्रभातम्॥
॥ १८॥ त्वत्पादधूलिभरितस्फुरितोत्तमांगाः
स्वर्गापवर्गनिरपेक्षनिजांतरंगाः ॥ कल्पाग
माकलितया कलितांलभंते श्रीवेंकटाचलप
ते तव सुप्रभातम्॥ १९॥ त्वद्गोपुराग्रशिखरा
णिनिरीक्षमाणाःस्वर्गापवर्गपदवीपदमाश्रयं
ते॥ मर्त्यामनुष्यभवने मतिमाश्रयंते श्रीवेंक
टाचलपते तव सुप्रभातम्॥ २०॥ श्रीभूमिना

यकदयादिगुणामृताब्धे देवादिदेव जगदेक
शरण्यमूर्त्तें ॥ श्रीमन्ननंत गरुडादिभिरर्चिताँ
घ्रे श्रीवेंकटाचलपते तव सुप्रभातम् ॥२१॥
श्रीपद्मनाभ पुरुषोत्तम वासुदेव वैकुंठ माधव
जनार्दन चक्रपाणे ॥ श्रीवत्सचिन्ह शरणाग
तपारिजात श्रीवेंकटाचलपते तव सुप्रभातं
॥२२॥कंदर्पदर्पहर सुंदरदिव्यमूर्त्तें कांताकु
चांबुरुहकुड्मललीनदृष्टे ॥ कल्याणनिर्मल
गुणाकर दिव्यकीर्त्तें श्रीवेंकटाचलपते तवसु
प्रभातम्॥२३॥मीनाकृते कमठ कोल नृसिं
हवर्णिन् स्वामिन्परश्वधतपोधन रामचंद्र ॥
शेषांश राम यदुनंदन कल्किरूप श्रीवेंकटा
चलपते तव सुप्रभातम्॥ २४ ॥ एलालवंग
घनसारसुगंधतीर्थं दिव्यं वियत्सरसि हेमघ
टेषु पूर्णम् ॥ धृत्वाद्य वैदिकशिखामणयः प्रह

र्षीत्तिष्ठंति वेंकटपते तव सुप्रभातम् ॥ २५॥ भास्वानुदेति विकचानि सरोरुहाणि संपूरयंति निनदैः ककुभो विहंगाः ॥ श्रीवैष्णवाःसततमंगलमर्थितास्ते धामाश्रयंति तव वेंकट सुप्रभातम् ॥२६ ॥ ब्रह्मादयः शिवसुरेशमहर्षयस्ते संतःसनंदनमुखास्त्वथ योगिवर्याः॥ धामांतिके तव हि मंगलवस्तुहस्ताः श्रीवेंकटाचलपते तव सुप्रभातम्॥ २७ ॥ लक्ष्मीनिवास निरवद्यगुणैकसिंधो संसारसागर समुत्तरणैकसेतो ॥ वेदांतवेद्य निजवैभवभक्तभोग्य श्रीवेंकटाचलपते तव सुप्रभातम्॥ २८॥ इत्थं वृषाचलपतेरिह सुप्रभातं ये मानवाःप्रतिदिनं पठितुं प्रवृत्ताः ॥ तेषां प्रभातसमये स्मृतिरंगभाजां प्रज्ञां परार्थसुलभां परमां प्रसूते॥ २९ ॥ इतिश्रीवेंकटेशसुप्रभातं सं० ३३

श्रीमते रामानुजाय नमः ॥ कमलाकुचचू
चुककुंकुमतोनियतारुणतातुलनीलतनो ॥
कमलायतलोचन लोकपते विजयी भव वेंक
टशैलपते १ ॥सचतुर्मखषण्मुखपंचमुखप्रमु
खाखिलदैवतमौलिमणे ॥ शरणागतवत्सल
सारनिधे परिपालय मां वृषशैलपते ॥ २ ॥
अतिवेलतया तव दुर्विषयैरनुवेलकृतैरपरा
धशतैः ॥ भरितं त्वरितं वृषशैलपते परया कृ
पया परिपाहि हरे॥ ३ ॥अधिवेंकटशैलमुदार
मते जनताभिमताधिकदानरतात्।परदेवत
याकथितान्निगमैःकमलादयितान्नपरंकलये
४ कलवेणुरवावशगोपवधूशतकोटिवृतात्स्म
रकोटिसमात्॥ प्रतिवल्लवि चाभिमतात् सुहृ
दो वसुदेवसुतान्नपरं कलये५अभिरामगुणा

कर दाशरथे जगदेकधनुर्धर धीरमते॥रघुना
यक राम रमेश विभो वरदो भव देव दयाज
लधे॥६॥अवनीतनयाकमनीयवरं रजनीक
रचारुमुखांबुरुहं ॥रजनीचरराजितमोमिहि
रंमहनीयमहं रघुराममये॥७ ॥सुमुखं सुहृदं
सुलभं सुखदं सुजनं वसुजातममोघशरं॥अ
पहाय रघूद्वहमन्यमहं न कथंचन कंचन जा
तु भजे ॥ ८॥विना वेंकटेशं न नाथो न नाथः
सदा वेंकटेशं स्मरामि स्मरामि ॥हरे वेंकटेश
प्रसीद प्रसीद प्रियं वेंकटेश प्रयच्छ प्रयच्छ
॥ ९ ॥ अहं दूरतस्ते पदांभोजयुग्मप्रणामे
च्छयागत्य सेवां करोमि ॥ सकृत्सेवया नि
त्यसेवाफलं त्वं प्रयच्छ प्रयच्छ प्रभो वेंकटेश
॥१०॥अज्ञानिना मया दोषानशेषान् विहि
तान् हरे॥क्षमस्व त्वं क्षमस्वत्वं शेषशैलशिखा

मणे॥११॥ ईशानां जगतोऽस्य वेंकटपतेर्वि
ष्णोः परां प्रेयसीं तद्वक्षःस्थलनित्यवासर
सिकां तत्क्षांतिसंवर्धिनीं ॥ पद्मालंकृतपाणि
पल्लवयुगां पद्मासनस्थां श्रियंवात्सल्यादिगु
णोज्ज्वलां भगवतीं वंदे जगन्मातरम्॥१२॥
इति श्रीवेंकटेशस्तोत्रं संपूर्णम् ॥ ॥२७॥

॥ श्रीजितंतेस्तोत्रम् ॥

श्रीमते रामानुजाय नमः॥जितं ते पुंडरीका
क्ष पूर्णषाड्गुण्यविग्रह ॥ परानंद परंब्रह्म न
मस्ते चतुरात्मने१॥नमस्ते पीतवसन नमः
कटकधारिणे॥नमोनीलालकाबद्धवेणीसुंदर
पुंगव॥२॥स्फुरद्वलयकेयूरनूपुरांगदभूषणैः
॥ शोभनैर्भूषिताकारकल्याणगुणराशये ३॥
करुणापूर्णहृदय शंखचक्रगदाधर ॥ अमृता

नंदपूर्णाभ्यां लोचनाभ्यां विलोकय ॥४॥कृ
शं कृतघ्नं दुष्कर्मकारिणं पापभाजनम् ॥ अ
पराधसहस्राणामाकरं करुणाकर ॥ ५॥कृप
या मां केवलया गृहाण मथुराधिप ॥ विषया
र्णवमग्नं मामुद्धर्तुं त्वमिहार्हसि॥६॥पिता मा
ता सुहृद्बंधुर्भ्राता पुत्रस्त्वमेव मे ॥ विद्याधनं
च्च कामश्च नान्यत्किंचित्त्वया विना॥७॥यत्र
कुत्र कुले वासो येषु केषु भवोऽस्तु मे॥तव दा
स्यैकभावेस्यात्सदा सर्वत्र मे रतिः ॥८॥मन
सा कर्मणा वाचा शिरसा वा कथंचन॥त्वां वि
ना नान्यमुद्दिश्य करिष्ये किंचिदप्यहं॥९॥
पाहि पाहि जगन्नाथ कृपया भक्तवत्सल ॥ अ
नाथोऽहमधन्योहमकृतार्थोह्यकिंचनः १०॥
नृशंसः पापकृत्क्रूरोवंचकोनिष्ठुरः सदा ॥
भवार्णवनिमग्नं मामनन्यकरुणोदधे ॥ ११॥

करुणापूर्णदृष्टिभ्यां दीनं मामवलोकय ॥ त्व
दग्रे पतितं त्यक्तुं तावकं नार्हसि प्रभो॥१२॥
मया कृतानि पापानि त्रिविधानि पुनःपुनः ॥
त्वत्पादपंकजं प्राप्तं नान्यत्त्वत्करुणां विना
॥ १३ ॥ साधनानि प्रसिद्धानि यागादीन्य
ब्जलोचन ॥ त्वदाज्ञया प्रयुक्तानि त्वामुद्दि
श्य कृतानि वै ॥ १४॥ भक्त्यैकलभ्यःपुरुषो
त्तमो हि जगत्प्रसूतिस्थितिनाशहेतुः॥ अकिं
चनं नान्यगतिं शरण्य गृहाण मां क्लेशिन
मंबुजाक्ष ॥ १५ ॥ धर्मार्थकाममोक्षेषु नेच्छा
मम कदाचन ॥ त्वत्पादपंकजं साधोर्जीवितं
दीयतां मम॥१६॥कामये तावकत्वेन परिच
र्यासु वर्तनम्॥नित्यं किंकरभावेन परिगृण्ही
ष्व मां विभो ॥ १७॥ लोकंवैकुंठनामानं दि
व्यं षाड्गुण्यसंयुतम् ॥अवैष्णवानामप्राप्यं

गुणत्रयविवर्जितम् ॥१८॥ नित्यसिद्धैःसमा
कीर्णं त्वन्मयैः पांचकालिकैः ॥ सभाप्रासाद
संयुक्तं वनैश्चोपवनैःशुभैः ॥ १९ ॥ वापीकूप
तटाकैश्च वृक्षषंडैः सुमंडितम् ॥अप्राकृतसुरै
र्वंद्यमयुतार्कसमप्रभम् ॥ २०॥ प्रकृष्टसत्वरा
शिं त्वां कदा द्रक्ष्यामि चक्षुषा॥क्रीडंतं रमया
सार्द्धं लीलाभूमिषु केशवम्॥ २१ ॥ मेघश्या
मं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा ॥उन्नसं
चारुदशनं बिंबोष्ठं च शुभाननम् ॥ २२॥ वि
शालवक्षसं श्रीशं कंबुग्रीवं जगद्गुरुम्॥आजा
नुबाहुपरिघमुन्नतांसं मधुद्विषम्॥ २३॥ तनू
दरं निम्ननाभिमापीनजघनं हरिम् ॥ करभो
रुश्रियः कांतं कदा द्रक्ष्यामि चक्षुषा॥२४॥
शंखचक्रगदापद्मैरंकितं पादपंकजम्॥शरच्चं
द्रशताक्रांतं नखराजिविराजितम्॥२५ ॥सु

रासुरैर्वंद्यमानमृषिभिर्विदितं सदा ॥ मूर्द्धानं
मामकं देव तावकं मंडयिष्यति॥२६॥कदा
गंभीरया वाचा श्रिया युक्तो जगत्पते ॥ चाम
रव्यग्रहस्तं मामेवं कुर्विति वक्ष्यसि ॥ २७॥
कदाहं राजराजेन गणनाथेन चोदितः ॥ चरे
यं भगवत्पादपरिचर्यानुवृत्तिषु ॥२८॥ शांता
य सुविशुद्धाय तेजसे परमात्मने ॥ नमःसर्व
गुणातीतषाड्गुण्यायातिवेधसे ॥२९॥सत्य
ज्ञानानंतगुणब्रह्मणे चतुरात्मने ॥ चतुःपंच
नवव्यूहदशद्वादशमूर्त्तये॥३०॥नमोऽनंताय
विश्वाय विश्वातीताय चक्रिणे ॥नमस्ते पंच
कालज्ञ पंचकालपरायण॥३१॥पंचकालैक
मनसां त्वमेव गतिरव्ययः ॥स्वमहिम्नि स्थि
तं देवं निर्विकारं निरंजनम् ॥३२॥ अप्रमेय
मजं विष्णुं शरणं त्वां गतोस्म्यहम् ॥गुणाती

तं परं शांतमब्जनाभं सुरेश्वरम् ॥ ३३॥ तुरी
याद्यतिरिक्तं त्वां कौस्तुभोद्भासिवक्षसम्॥ वि
श्वरूपं विशालाक्षं कदाद्रक्ष्यामिचक्षुषा ३४
मोक्षं सालोक्यसारूप्यं प्रार्थये न धराधर॥ इ
च्छामिं हि महाभाग कारुण्यं तव सुव्रत ३५॥
सकलाचरणातीतःकिंकरोऽस्मितवानघ॥पु
नःपुनः किंकरोस्मि तवाहं पुरुषोत्तम॥३६॥
आसनाद्यनुयागांतमर्चनं यन्मया कृतम्॥भो
गहीनं क्रियाहीनं मंत्रहीनमभक्तिकम्॥३७॥
तत्सर्वं क्षम्यतां देव दीनं मामात्मसात्कुरु॥इ
ति स्तोत्रेण देवेशं स्तुत्वा मधुविघातिनम् ॥
॥ ३८॥ यागावसानसमये देवदेवस्य चक्रि
णः॥ नित्यं किंकरभावेन स्वात्मानं विनिवेद
येत्॥३९॥ ॥ इतिं श्रीपंचरात्रागमेजितं
तेस्तोत्रे प्रथमोध्यायः॥ १॥ ॥ जितं ते

पुण्डरीकाक्ष नमस्तेविश्वभावन॥नमस्तेऽस्तु
हृषीकेश महापुरुषपूर्वज॥ १ ॥विज्ञापनमिदं
देव शृणुष्व पुरुषोत्तम ॥ नरनारायणाभ्यां
च श्वेतद्वीपनिवासिभिः ॥ २ ॥ नारदाद्यैर्मु
निगणैःसनकाद्यैश्च योगिभिः ॥ ब्रह्मेशाद्यैः
सुरगणैः पञ्चकालपरायणैः ॥ ३ ॥ पूज्य
से पुण्डरीकाक्ष दिव्यैर्म्मंत्रैर्महात्मभिः ॥ पा
षण्डधर्म्मसंकीर्णे भगवद्भक्तिवर्जिते ॥ ४ ॥
कलौ जातोऽस्मि देवेश सर्वधर्मबहिष्कृते ॥क
थं त्वामसमाचारः पापप्रसवभूरहम् ॥ ५ ॥
अर्चयामि दयासिंधो पाहि मां शरणागतम्॥
तापत्रयदवाग्नौ च दह्यमानं सदा विभो॥६॥
पाहि मां पुंडरीकाक्ष केवलं कृपया तव ॥ ज
न्ममृत्युजराव्याधिदुःखसंतप्तदेहिनम् ॥ पा
लयाशु दृशा देव तव कारुण्यगर्भया ॥७॥ इं

न्द्रियाणि मया जेतुमशक्यं पुरुषोत्तम ॥ शरीरं
मम देवेश व्याधिभिः परिपीडितम् ॥ ८ ॥ म
नोमे पुंडरीकाक्ष विषयानेव धावति ॥ वाणी
मम हृषीकेश मिथ्यापारुष्यदूषिता ॥ ९ ॥ ए
वं साधनहीनोहं किं करिष्यामि केशव ॥ रक्ष
मां कृपया कृष्ण भवाब्धौ पतितं सदा ॥ १० ॥
अपराधसहस्राणां सहस्रमयुतं तथा ॥ अर्बु
दं चाप्यसंख्येयं करुणाब्धे क्षमस्व मे ॥ ११ ॥
यच्चापराधं कृतवानज्ञानात्पुरुषोत्तम ॥ अज्ञ
स्य मम देवेश तत्सर्वं क्षंतुमर्हसि ॥ १२ ॥ अ
ज्ञत्वादल्पशक्तित्वादालस्याद्दुष्टभावनात् । कृ
तापराधं कृपणं क्षंतुमर्हसि मां विभो ॥ १३ ॥
अपराधसहस्राणि क्रियंतेऽहर्निशंमया ॥ ता
नि सर्वाणि मे देव क्षमस्व मधुसूदन ॥ १४ ॥
यज्जन्मनः प्रभृति मोहवशंगतेन नानापराध

शतमाचरितं मया ते॥अंतर्बहिश्च सकलं त
व पश्यतोपि क्षंतुं त्वमर्हसि हरे करुणावशेन
॥ १५ ॥ कर्मणा मनसा वाचा या चेष्टा मम
नित्यशः ॥ केशवाराधने सा स्याज्जन्मजन्मां
तरेष्वपि ॥ १६ ॥ ॥ इति श्रीपंचरात्रा
गमे जितंतेस्तोत्रेद्वितीयोध्यायः ॥ २ ॥
जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन ॥ न
मस्तेस्तु हृषीकेश महापुरुषपूर्वज ॥१॥नम
स्ते वासुदेवाय शांतानंदचिदात्मने ॥ अध्य
क्षाय स्वतंत्राय निरपेक्षाय शाश्वते२॥अच्यु
तायाविकाराय तेजसां निधये नमः॥ क्लेशक
र्माद्यसंस्पृष्टपूर्णषाड्गुण्यमूर्त्तये ॥३ ॥ त्रिभि
र्ज्ञानबलैश्वर्यवीर्यशक्त्योजसां युगैः ॥ त्रियु
गाय नमस्तेस्तु नमस्ते चतुरात्मने ॥४॥ प्र
धानपुरुषेशाय नमस्ते पुरुषोत्तम।चतुःपंचन

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



व्यूह दशद्वादशमूर्तये५।।अनेकमूर्तये तुभ्य
ममूर्त्तायैकमूर्त्तये।।नारायण नमस्तेऽस्तु पुंड
रीकायतेक्षण ॥ ६ ॥ सुभ्रूललाट सुनस सु
स्मिताधरविद्रुम ॥पीनवृत्तायतभुज श्रीवत्स
कृतभूषण ॥७॥तनुमध्य महावक्षः पद्मनाभ
नमोस्तु ते ॥विलासविक्रमाक्रांतत्रैलोक्यच
रणांबुज ॥८॥ नमस्ते पीतवसन स्फुरन्मक
रकुंडल ॥ स्फुरत्किरीटकेयूरहारकौस्तुभभू
षण॥९।पंचायुध नमस्तेस्तु नमस्ते पंचका
लिक।।पंचकालायतेक्रांतयोगक्षेमावह प्रभो
॥१०॥नित्यज्ञानबलैश्वर्य्यभोगोपकरणाच्यु
त।नमस्ते ब्रह्मरुद्रादिलोकयात्राप्रवर्तक११
जन्मप्रभृति दासोस्मि शिष्योस्मि तनयोस्मि
ते ॥त्वं च स्वामी गुरुर्माता पिता च मम मा
धव॥ १२ ॥ अयि त्वां भगवन् ब्रह्मशिवश

क्रमहर्षयः ॥ द्रष्टुं यष्टुमभिष्टोतुमद्यापीश न
हीशिरे ॥ १३ ॥ तापत्रयमहाग्राहभीषणे भ
वसागरे ॥ मज्जतां नाथ नौरेषा प्रणतिस्तु
त्वदर्पिता ॥ १४ ॥ अनाथाय जगन्नाथ शर
ण्यशरणार्थिने ॥ प्रसीद सीदते मह्यं मुह्यते
भक्तवत्सल ॥ १५ ॥ मंत्रहीनं क्रियाहीनं भ
क्तिहीनं यदर्चितम्॥तत् क्षंतव्यं प्रपन्नानाम
पराधसहो ह्यसि॥ १६ ॥सर्वेषु देशकालेषु स
र्वावस्थासु चाच्युत॥किंकरोस्मि हृषीकेश भू
योभूयोस्मि किंकरः ॥ १७ ॥एकत्रिचतुरत्यं
तचेष्ट ज्येष्ठाकृतिस्थिते ॥ व्यक्तषाड्गुण्यचे
ष्टाय चतुरात्मात्मनेनमः॥ १८ ॥इतिश्रीपंच
रा० जितंतेस्तोत्रेतृतीयोध्यायः ॥ ३ ॥ ॥
जितं ते पुंडरीकाक्षपूर्णषाड्गुण्यविग्रह ॥ न
मस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥ १ ॥

देवानां दानवानां च सामान्यमधिदैवतम् ॥
सर्वदा चरणद्वंद्वं व्रजामि शरणं तव ॥ २ ॥
एकस्त्वमस्य लोकस्य स्रष्टा संहारकस्तथा॥
अध्यक्षश्चानुमंता च गुणमायासमावृतः ३॥
संसारसागरं घोरमनंतक्लेशभाजनम् ॥ त्वा
मेव शरणं प्राप्य निस्तरंति मनीषिणः॥ ४॥
न ते रूपं न चाकारो नायुधानि न चास्पदं॥
तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे५॥
नैव किंचित् परोक्षं ते प्रत्यक्षोसि न कस्यचि
त्॥ नैव किंचिदसाध्यं ते नचासिद्धोसि कर्हि
चित् ॥ ६॥ कार्य्याणां कारणं पूर्वं वचसां वा
च्यमुत्तमं ॥ योगिनां परमां सिद्धिं परमं ते प
दं विदुः ॥ ७ ॥ अहं भीतोस्मि देवेश संसारे
स्मिन् भयावहे ॥ पाहि मां पुंडरीकाक्ष न जा
ने शरणं परम्॥ ८ ॥ कालेष्वपि च सर्वेषु

दिक्षु सर्वासु चाच्युत ॥शरीरे च गतौ चास्य वर्तते मे महद्भयम्॥९॥त्वत्पादकमलादन्य न्न मे जन्मांतरेष्वपि॥निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम् ॥१०॥विज्ञानं यदि दं प्राप्तं यदिदं ज्ञानमूर्जितम् ॥ जन्मांतरेपि देवेश माभूदस्य परिक्षयः ॥ ११ ॥ दुर्गताव पि जातायां त्वद्गतो मे मनोरथः ॥यदि नाशं न विंदेत तावतास्मि कृती सदा ॥ १२ ॥ न कामकलुषं चित्तं मम ते पादयोः स्थितम् ॥ कामये वैष्णवत्वं च सर्वजन्मसु केवलम्१३ अज्ञानाद्यदि वा ज्ञानादशुभं यत्कृतं मया ॥ क्षंतुमर्हसि देवेश दास्येन च गृहाण माम् ॥ ॥ १४ ॥ सर्वेषु देशकालेषु सर्वावस्थासु चा च्युत ॥ किंकरोस्मि हृषीकेश भूयोभूयोस्मि किंकरः ॥ १५॥इत्येवमनया स्तुत्या स्तुत्वा

देवं दिनोदये ॥ किंकरोस्मीति चात्मानं देवा
य विनिवेदयेत् ॥ १६॥ यच्चापराधं कृतवान
ज्ञानात्पुरुषोत्तम ॥ अज्ञस्य मम देवेश तत्स
र्वं क्षंतुमर्हसि ॥ १७ ॥ अहंकारार्थकामेषु प्री
तिरद्यैव नश्यतु॥ त्वां प्रपन्नस्य मे सैव वर्द्धतां
श्रीमति त्वयि ॥ १८॥ काहमत्यंतदुर्बुद्धिः क्व
नु चात्महितेक्षणम् ॥ यद्धितं मम देवेश तदा
ज्ञापय माधव॥ १९ ॥ सोहं ते देवदेवेश नार्च
नादौ स्तुतौ न च ॥ सामर्थ्यवान् कृपामात्रम
नोवृत्तिः प्रसीद मे ॥ २० ॥ उपचारापदेशेन
क्रियंतेऽहर्निशं मया ॥ अपचारा इमान् स
र्वान्क्षमस्व पुरुषोत्तम ॥ २१ ॥ न जाने कर्म
यत्किंचिन्नापि लौकिकवैदिकौ ॥ न निषेध
विधी विष्णो तव दासोस्मि केवलम् ॥ २२॥
स त्वं प्रसीद भगवन् कुरु मय्यनाथे विष्णो कृ

पां परमकारुणिकः किल त्वम् ॥ संसारसाग
रनिमग्नमनंतदीनमुद्धर्त्तुमर्हसि हरे पुरुषोत्त
मोसि ॥ २३ ॥ इतिश्रीपंचरात्रागमे जितंते
स्तोत्रे चतुर्थोऽध्यायः॥ ४ ॥ ॥ छ ॥ ॥छ॥
जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन ॥ न
मस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥१॥न
मस्ते वासुदेवाय शांतानंदचिदात्मने॥अजि
ताय नमस्तुभ्यं षाड्गुण्यनिधये नमः।२॥म
हाविभूतिसंस्थाय नमस्ते पुरुषोत्तम ॥ सह
स्रशिरसे तुभ्यं सहस्रचरणाय ते ॥ ३ ॥ स
हस्रबाहवे तुभ्यं सहस्रनयनाय ते ॥ अमूर्त्त
ये नमस्तुभ्यमेकमूर्त्ताय ते नमः ॥ ४ ॥अने
कमूर्त्तये तुभ्यमक्षराय च ते नमः॥व्यापिने
वेदवेद्याय नमस्ते परमात्मने ॥५॥चिन्मात्र
रूपिणे तुभ्यं नमस्तुर्यादिमूर्त्तये ॥ अणिष्ठा

य स्थविष्ठाय महिष्ठाय च ते नमः ॥ ६ ॥ व
रिष्ठाय वसिष्ठाय कनिष्ठाय नमोनमः ॥ नेदि
ष्ठाय दविष्ठाय क्षेपिष्ठाय च ते नमः ॥ ७ ॥ पं
चात्मने नमस्तुभ्यं सर्वांतर्यामिणे नमः ॥ क
लाषोडशरूपाय सृष्टिस्थित्यंतहेतवे ॥ ८ ॥ न
मस्ते गुणरूपाय गुणरूपानुवर्तिने ॥ व्यस्ता
य च समस्ताय समस्तव्यस्तरूपिणे ॥ ९ ॥
लोकयात्राप्रसिद्ध्यर्थं सृष्टब्रह्मादिरूपिणे ॥ न
मस्तुभ्यं नृसिंहादिमूर्तिभेदाय विष्णवे १० ॥
आदिमध्यांतशून्याय तद्वते च नमोनमः ॥ प्र
णवप्रतिपाद्याय नमः प्रणवरूपिणे ॥ ११ ॥
विपाकैःकर्मभिः क्लेशैरस्पृष्टवपुषे नमः ॥ न
मोब्रह्मण्यदेवाय तेजसां निधये नमः ॥ १२ ॥
नित्यासाधारणानेकलोकरक्षापरिच्छदे ॥ स
च्चिदानंदरूपाय वरेण्याय नमोनमः ॥ १३ ॥

यजमानाय यज्ञाय यष्टव्याय नमोनमः॥नि
त्याकलात्मने तुभ्यं नमःस्वाध्यायशालिने॥
॥१४॥ नमःपरमहंसाय नमःसत्वगुणाय ते
॥स्थिताय परमे व्योम्नि भूयोभूयो नमोनमः
॥१५॥हरिर्देहभृतामात्मा परप्रकृतिरीश्वरः
॥त्वत्पादमूलं शरणं यतःक्षेमो नृणामिह१६
संसारसागरे घोरे विषयावर्त्तसंकुले ॥ अपारे
दुस्तरेगाधे वर्त्तेहं कर्मभिः स्वकैः ॥ १७ ॥अ
नाथमगतिं भीरुं दयया परया हरे ॥ मामुद्धर
दयासिंधो संसाराब्धेः सुदुस्तरात् ॥ १८ ॥
मंत्रहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् ॥
तत्क्षंतव्यं प्रपन्नानामपराधसहो ह्यसि १९॥
अपराधसहस्रभाजनं पतितं भीमभवार्णवो
दरे ॥अगतिं शरणागतं हरे कृपया केवलमा
त्मसात्कुरु ॥ २० ॥ जन्मप्रभृतिदासोस्मि

शिष्योस्मि तनयोस्मि ते ॥ त्वं च स्वामी गुरु
र्माता पिता च मम माधव॥ २१ ॥ नाहं हि त्वा
प्रजानामि त्वां भजाम्येव केवलम् ॥ बुद्ध्वैवं
मम गोविंद मुक्त्युपायेन मां हरे ॥ २२ ॥ त्वां
विना नान्यःप्रियोमे नेदं नेदमितीति च ॥ बु
द्धिं नीतिं च मे देहि येन त्वामुपयाम्यहं २ ३॥
इति विज्ञाप्य देवेशं वैश्वदेवं स्वधामनि ॥ कु
र्य्यात् पंचमहायज्ञानपि गृह्योक्तकर्मणा ॥
॥ २ ४ ॥ इत्यादिसमये तस्य कथितःकमलास
नः॥ वेदानां सारमुद्धृत्य सर्वागमसमृद्धये २५
इतिश्रीपंचरा॰ महोपनिषदिब्रह्मतंत्रेश्रीमद
ष्टाक्षरकल्पे जितंतेस्तोत्रेपंचमोध्यायः २८॥

॥ सुमंगलस्तोत्रप्रारंभः ॥

श्रीमते रामानुजाय नमः॥ सुमंगलं मंगल

मीश्वराय ते सुमंगलं मंगलमच्युताय ते ॥
सुमंगलं मंगलमंतरात्मने सुमंगलं मंगलम
ब्जनाभ ते ॥१॥ सुमंगलं श्रीनिलयोरुवक्षसे
सुमंगलं पद्मभवादिसेविते॥सुमंगलं पद्मज
गन्निवासिने सुमंगलं चाश्रितमुक्तिदायिने ॥
॥ २ ॥चाणूरदर्पघ्नसुबाहुदंडयोः सुमंगलं मं
गलमादिपूरुषे ॥ बालार्ककोटिप्रतिभाय ते
विभो चक्राय दैत्येंद्रविनाशहेतवे ॥ ३ ॥ शं
खाय कोटींदुसमानतेजसे शार्ङ्गाय रत्नोज्ज्व
लदिव्यरूपिणे ॥ खड्गाय विद्यामयविग्रहाय
ते सुमंगलं मंगलमस्तु ते विभो ॥ ४ ॥
तदावयोस्तत्त्वविशिष्टशेषिणे शेषित्वसंबंध
निबोधनाय ते॥यन्मंगलानांच सुमंगलायते
पुनः पुनर्मंगलमस्तु संततम् ॥ ५॥ इतिश्री
विष्णुचित्तस्वामिकृतंमंगलस्तोत्रं संपूर्णं२९

# १६२ अथ गोपालविंशतिप्रारंभः

श्रीमते रामानुजाय नमः। श्रीमान् वेंकटनाथार्यः कवितार्किककेसरी। वेदांताचार्य्यवर्यो मे संनिधत्तां सदा हृदि ॥१॥ वंदे वृंदावनचरं बल्लवीजनवल्लभम्॥ जयंतीसंभवं धाम वैजयंतीविभूषणम्॥२॥वाचं निजांकरसिकां प्रसमीक्षमाणोवक्त्रारविंद विनिवेशितपांचजन्यः॥वर्णत्रिकोणरुचिरे वरपुंडरीके बद्धासनो जयति बल्लवचक्रवर्ती॥३॥आम्नायगंधरुचिरस्फुरिताधरोष्ठमास्त्राविलेक्षणमनुक्षणमन्दहासं॥ गोपालडिंभवपुषं कुहनाजनन्याः प्राणस्तनंधयमवैमि परं पुमांसम्॥४॥आविर्भवत्यनिभृताभरणं पुरस्तादाकुंचितैकचरणं निहितान्यपापम्॥ दध्ना निबद्धमुकुरेण निबद्धतालं नाथस्य नंदभवने नवनीतनाट्यम् ५॥

कुंदप्रसूनविशदैर्दशनैश्चतुर्भिः संदश्य मातुर
निशं कुचचूचुकाग्रम्।नंदस्यवक्त्रमवलोकय
तोमुरारेर्मंदस्मितं मम मनीषितमातनोतु६
हर्त्तुं कुंभे विनिहितकरः स्वादु हैयंगवीनं दृ
ष्ट्वा दामग्रहणचटुलां मातरं जातरोषाम्॥पा
यादीषत्प्रचलितपदो नापगच्छन्न तिष्ठन्मि
थ्यागोपः सपदि नयने मीलयन् विश्वगोप्ता
॥ ७ ॥ व्रजयोषिदपांगवेदनीयं मधुराभाग्य
मनन्यभोग्यमीडे ॥वसुदेववधूस्तनंधयं तत्
किमपि ब्रह्म किशोरभावदृश्यम् ॥८॥ परिव
र्तितकंधरं भयेन स्मितफुल्लाधरपल्लवं स्मरा
मि॥विटपित्वनिरासकं कयोश्चिद्विपुलोलूख
लकर्षकं कुमारं।९।।निकटेषुनिशामयामि नि
त्यं निगमांतैरधुनापि मृग्यमाणम् ॥ यमला
र्जुनदृष्टबालकेलिं यमुनासाक्षिकयौवतं युवा

नम् ॥ १० ॥ पदवीमदवीयसीं विमुक्तेरटवी
संपदमंबुवाहयंतीं ॥ अरुणाधरसाभिलाषवं
शां करुणां कारणमानुषं भजामि ॥ ११ ॥अ
निमेषनिषेवणीयमक्ष्णोरजहद्यौवनमाविर
स्त्वचित्ते ॥कलहायितकुंतलं कलापैःकरुणो
न्मादकविग्रहं मनो मे ॥ १२ ॥ अनुयायिम
नोज्ञवंशनालैरवतु स्पर्शितवल्लवीविमोघैः ॥
अनघस्मितशीतलैरसौ मामनुकंपासरिदंबु
जैरपांगैः॥ १३॥अधराहितचारुवंशनाला मु
कुटालंबिमयूरपिच्छमालाः॥हरिनीलशिला
विहंगलीलाःप्रतिभास्त्वंतु ममांतिमप्रमाणे ॥
॥१४॥ अखिलानवलोकयामि कालान्महि
लादीनभुजांतरस्य यूनः ॥ अभिलाषपदं व्र
जांगनानामभिलापक्रमदूरमाभिरूप्यं॥ १५
महसे महिताय मौलिना विनतेनांजलिमंज

नंत्विषे ॥ कलयामि विमुग्धवल्लवीवलयाभा
षितमंजुवेणवे॥ १६ ॥जयतु ललितकृत्यं शिं
क्षकोवल्लवीनां शिथिलवलयसिंजाशीतलैर्ह
स्तताले: ॥ अखिलभुवनरक्षागोपवेषस्यवि
ष्णोरधरमणिसुधायांवंशवान्वंशनाल: ॥१७
च्चित्राकल्पश्रवसिवलयंलांगलीकर्णपूरं बर्हो
त्तंसस्फुरितचिकुरो बंधुजीवं दधानः॥गुंजाब
द्धामुरसिललितां धारयन् हारयष्टिं गोपस्त्री
णां जयति कितवः कोपि कौमारहारी ।१८।
लीलायष्टिं करकिसलये दक्षिणेन्यस्य धन्या
मंसे देव्याः पुलकनिविडे सन्निविष्टान्यबाहुः॥
मेघश्यामो जयति ललितं मेखलादत्तवेणुर्गुं
जापीडस्फुरितचिकुरो गोपकन्याभुजंगः १९
प्रत्यालीढस्मृतिमधिगतां प्राप्तगाढांगपालीं
पश्चादीषन्मिलितनयनां प्रेयसीं प्रेक्षमाणः॥

भक्तत्रायंत्रप्राणिहितकरो भक्तजीवातुरव्याद्वा
रिक्रीडानिबिडवसनो बल्लवीवल्लभोनः॥२०॥
वासो हृत्वा दिनकरसुतासन्निधौ बल्लवीनांली
लास्मेरो जयति ललितामास्थितःकुंदशाखा
म्॥ सव्रीडाभिस्तदनुवसनं ताभिरभ्यर्थ्यमा
नः कामी कश्चित्करकमलयोरंजलिं याचमा
नः॥ २१ ॥इत्यनन्यमनसा विनिर्मितां वेंक
टेशकविना स्तुतिं पठन्॥ दिव्यवेणुरसिकैः
समीक्षते दैवतं किमपि यौवतप्रियं ॥ २२ ॥
इतिगोपालविंशतिःसंपूर्णा॥ ३० ॥ ॥छ॥

## ॥ अथ मूलरामायणप्रारंभः ॥

श्रीमते रामानुजाय नमः।जयति रघुवंशति
लकः कौसल्याहृदयनंदनोरामः ॥दशवदन
निधनकारी दाशरथिः पुंडरीकाक्षः ॥ १॥ कू

जंतं राम रामेति मधुरं मधुराक्षरम् ॥ आरु
ह्य कविताशाखां वंदे वाल्मीकिकोकिलम्॥२॥
वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः॥
शृण्वन् रामकथानादं को न याति परां गति
म् ॥३ ॥ यः पिबन् सततं रामचरितामृतसा
गरम् ॥अतृप्तस्तं मुनिं वंदे प्राचेतसमकल्म
षम् ॥ ४॥ गोष्पदीकृतवारीशं मशकीकृतरा
क्षसम् ॥ रामायणमहामालारत्नं वंदेऽनि
लात्मजम् ॥५ ॥ अंजनानंदनं वीरं जानकी
शोकनाशनम् ॥ कपीशमक्षहंतारं वन्दे लंका
भयंकरम्॥६॥उल्लंघ्य सिंधोः सलिलं सली
लंयःशोकवन्हिं जनकात्मजायाः ॥ आदाय
तेनैव ददाह लंकां नमामि तं प्रांजलिरांजने
यम् ॥७॥ मनोजवं मारुततुल्यवेगं जितेंद्रि
यं बुद्धिमतां वरिष्ठम्॥वातात्मजं वानरयूथमु

ख्यं श्रीरामदूतं शिरसा नमामि ॥ ८ ॥ श्रीरा
घवं दशरथात्मजमप्रमेयं सीतापतिं रघुकु
लान्वयरत्नदीपम् ॥ आजानुबाहुमरविंददला
यताक्षं रामं निशाचरविनाशकरं नमामि । ९
वेदवेद्ये परे पुंसि जाते दशरथात्मजे । वेदः प्रा
चेतसादासीत् साक्षाद्रामायणात्मना ॥ १० ॥
शृण्वन् रामायणं भक्त्या यः पादं पदमेव वा ॥
स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा
॥ ११ ॥ यः कर्णांजलिसंपुटैरहरहः सम्यक् पि
बत्यादराद्वाल्मीकेर्वदनारविंदगलितं रामा
यणाख्यं मधु ॥ जन्मव्याधिजराविपत्तिमर
णैरत्यंतसोपद्रवं संसारं स विहाय गच्छति पु
मान्विष्णोः पदं शाश्वतं ॥ १२ ॥ तदुपगतसमा
ससंधियोगं सममधुरप्रणतार्थवाक्यबद्धम् ॥
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं

निशामयध्वम् ॥ १३॥ यत्र यत्र रघुनाथकी
र्तनं तत्र तत्र कृतमस्तकांजलिम् ॥बाष्पवा
रिपरिपूर्णलोचनं मारुतिं नमत राक्षसांतक
म् ॥ १४ ॥ वाल्मीकिगिरिसंभूता रामसागरं
गामिनी ॥ पुनातु भुवनं पुण्या रामायणम
हानदी ॥ १५ ॥ जितं भगवता तेन हरिणा
लोकधारिणा ॥ अजेन विश्वरूपेण निर्गुणेन
गुणात्मना॥१६॥ ॥ तपःस्वाध्यायनिरतं त
पस्वी वाग्विदांवरम् ॥ नारदं परिपप्रच्छ वा
ल्मीकिर्मुनिपुंगवम् ॥ १७॥ कोन्वस्मिन् सां
प्रतं लोके गुणवान् कश्च वीर्यवान्॥धर्मज्ञश्च
कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥ १८॥ चारि
त्रेण च को युक्तःसर्वभूतेषु को हितः ॥विद्वान्
कः कः समर्थश्च कश्चैकप्रियदर्शनः ॥१९ ॥
आत्मवान्को जितक्रोधो द्युतिमान्कोनसूय

कः॥कस्य बिभ्यति देवाश्च जातरोषस्य संयु
गे ॥ २० ॥ एतदिच्छाम्यहं श्रोतुं परं कौतूह
लं हि मे ॥ महर्षे त्वं समर्थोसि ज्ञातुमेवंविधं
नरम् ॥ २१॥ श्रुत्वा चैतत्त्रिलोकज्ञो वाल्मी
केर्नारदो वचः॥श्रूयतामिति चामंत्र्य प्रहृष्टो
वाक्यमब्रवीत् ॥ २२ ॥ बहवो दुर्लभाश्चैव ये
त्वया कीर्त्तिता गुणाः ॥ मुने वक्ष्याम्यहं बुद्ध्वा
तैर्युक्तः श्रूयतां नरः ॥२३॥ इक्ष्वाकुवंशप्रभ
वो रामो नाम जनैःश्रुतः॥नियतात्मा महावी
र्यो द्युतिमान् धृतिमान् वशी॥२४॥बुद्धिमान्नी
तिमान् वाग्मी श्रीमान् शत्रुनिबर्हणः ॥ विपु
लांसो महाबाहुः कंबुग्रीवो महाहनुः ॥ २५॥
महोरस्को महेष्वासो गूढजत्रुररिंदमः ॥ आ
जानुबाहुः सुशिराः सुललाटः सुविक्रमः २६
समःसमविभक्तांगःस्निग्धवर्णः प्रतापवान् ॥

पीनवक्षा विशालाक्षो लक्ष्मीवान् शुभलक्ष
णः॥२७॥धर्मज्ञःसत्यसंधश्च प्रजानां च हिते
रतः ॥ यशस्वी ज्ञानसंपन्नः शुचिर्वश्यः समा
धिमान् ॥ २८ ॥ प्रजापतिसमः श्रीमान् धा
ता रिपुनिषूदनः ॥रक्षिता जीवलोकस्य धर्म
स्य परिरक्षिता॥२९॥रक्षिता स्वस्य धर्मस्य
स्वजनस्य च रक्षिता॥वेदवेदांगतत्त्वज्ञो धनु
र्वेदे च निष्ठितः ॥ ३०॥ सर्वशास्त्रार्थतत्त्वज्ञः
स्मृतिमान् प्रतिभानवान् ॥ सर्वलोकप्रियः
साधुरदीनात्मा विचक्षणः ॥ ३१ ॥ सर्वदाभि
गतः सद्भिः समुद्रइव सिंधुभिः ॥ आर्यः सर्व
समश्चैव सदैव प्रियदर्शनः॥३२॥ स च सर्व
गुणोपेतः कौसल्यानंदवर्द्धनः॥समुद्र इव गां
भीर्ये धैर्येण हिमवानिव ॥ ३३ ॥ विष्णुना
सदृशो वीर्ये सोमवत् प्रियदर्शनः ॥ कालाग्नि

सदृशः क्रोधे क्षमया पृथिवीसमः ॥ ३४ ॥ धन
देन समस्त्यागे सत्ये धर्म इवापरः ॥ तमेवं गुण
संपन्नं रामं सत्यपराक्रमम् ॥ ३५ ॥ ज्येष्ठं ज्ये
ष्ठगुणैर्युक्तं प्रियं दशरथः सुतम् ॥ प्रकृतीनां
हितैर्युक्तं प्रकृतिप्रियकाम्यया ॥ ३६ ॥ यौव
राज्येन संयोक्तुमैच्छत् प्रीत्या महीपतिः ॥ त
स्याभिषेकसंभारान् दृष्ट्वा भार्याथ कैकयी ॥
॥ ३७ ॥ पूर्वं दत्तवरा देवी वरमेनमयाचत ॥
विवासनं च रामस्य भरतस्याभिषेचनं ॥ ३८
स सत्यवचनाद्राजा धर्मपाशेन संयतः ॥ वि
वासयामास सुतं रामं दशरथः प्रियम् ॥ ३९
स जगाम वनं वीरः प्रतिज्ञामनुपालयन् ॥ पि
तुर्वचननिर्देशात् कैकेय्याः प्रियकारणात् ४०
तं व्रजंतं प्रियो भ्राता लक्ष्मणोऽनुजगाम ह ॥
स्नेहाद्विनयसंपन्नः सुमित्रानंदवर्द्धनः ॥ ४१ ॥

भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शयन् ॥
रामस्य दयिता भार्य्या नित्यं प्राणसमा हि
ता ॥४२॥ जनकस्य कुले जाता देवमायेव
निर्मिता ॥ सर्वलक्षणसंपन्ना नारीणामुत्तमा
वधूः ॥४३॥ सीताप्यनुगता रामं शशिनं रो
हिणी यथा॥ पौरैरनुगतो दूरं पित्रा दशरथेन
च ॥४४॥ शृंगवेरपुरे सूतं गंगाकूले व्यसर्ज
यत् ॥ गुहमासाद्य धर्मात्मा निषादाधिपतिं
प्रियम्॥४५॥गुहेन सहितो रामो लक्ष्मणेन
च सीतया॥तेवनेन वनं गत्वा नदीस्तीर्त्वा ब
हूदकाः ॥ ४६॥ चित्रकूटमनुप्राप्य भरद्वाज
स्य शासनात् ॥रम्यमावसथं कृत्वा रममाणा
वने त्रयः ॥ ४७ ॥ देवगंधर्वसंकाशास्तत्र ते
न्यवसन् सुखम् ॥ चित्रकूटं गते रामे पुत्रशो
कातुरस्तदा॥४८॥राजा दशरथः स्वर्गं जगा

म विलपन् सुतम् ॥ गते तु तस्मिन् भरतो व
सिष्ठप्रमुखैर्द्विजैः ॥ ४९ ॥ नियुज्यमानो राज्या
य नैच्छद्राज्यं महाबलः ॥ स जगाम वनं वीरो
रामपादप्रसादकः ॥ ५० ॥ गत्वा तु स महात्मा
नं रामं सत्यपराक्रमम् ॥ अयाचद्भ्रातरं राम
मार्यभावपुरस्कृतः ॥ ५१ ॥ त्वमेव राजा धर्मज्ञ
इति रामं वचोब्रवीत् ॥ रामोपि परमोदारः
सुमुखः सुमहायशाः ॥ ५२ ॥ न चैच्छत्
पितुरादेशाद्राज्यं रामो महाबलः ॥ पादुके
चास्य राज्याय न्यासं दत्वा पुनः पुनः ॥ ५३
निवर्त्तयामास ततो भरतं भरताग्रजः ॥ स का
ममनवाप्यैव रामपादावुपस्पृशन् ॥ ५४ ॥ नं
दिग्रामेकरोद्राज्यं रामागमनकांक्षया ॥ गते
तु भरते श्रीमान् सत्यसंधो जितेंद्रियः ५५ ॥
रामस्तु पुनरालक्ष्य नागरस्य जनस्य च ॥

तत्रागमनमेकाग्रो दंडकान् प्रविवेश ह५६॥
प्रविश्य तु महारण्यं रामो राजीवलोचनः ॥
विराधं राक्षसं हत्वा शरभंगं ददर्श ह ॥५७॥
सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं त
था ॥ अगस्त्यवचनाच्चैव जग्राहैंद्रं शरासनं॥
॥ ५८॥ खड्गंच परमप्रीतस्तूणी चाक्षय्यसा
यकौ ॥वसतस्तस्य रामस्य वने वनचरैःसह
॥५९॥ ऋषयोभ्यागमन्सर्वे वधायाऽसुररक्ष
सां ॥ स तेषां प्रतिशुश्राव राक्षसानां तदा व
ने ॥ ६० ॥ प्रतिज्ञातश्च रामेण वधः संयति
रक्षसां ॥ ऋषीणामग्निकल्पानां दंडकारण्य
वासिनां॥६१॥ तेन तत्रैव वसता जनस्थान
निवासिनी ॥ विरूपिता शूर्पणखा राक्षसी
कामरूपिणी ॥ ६२ ॥ ततः शूर्पणखावाक्या
दुद्युक्तान् सर्वराक्षसान्॥खरं त्रिशिरसंचैव दू

षणं चैव राक्षसम्॥६३॥निजघान रणे राम
स्तेषां चैव पदानुगान् ॥वने तस्मिन्निवसता
जनस्थाननिवासिनाम् ॥ ६४ ॥ रक्षसां निह
तान्यासन् सहस्राणि चतुर्दश॥ततो ज्ञातिव
धं श्रुत्वा रावणः क्रोधमूर्च्छितः ॥ ६५ ॥सहा
यं वरयामास मारीचं नाम राक्षसम्॥वार्यमा
णःसुबहुशो मारीचेन स रावणः॥६६॥न वि
रोधो बलवता क्षमो रावण तेन ते॥अनादृत्य
तु तद्वाक्यं रावणः कालचोदितः ॥ ६७॥ज
गाम सहमारीचस्तस्याश्रमपदं तदा ॥ तेन
मायाविना दूरमपवाह्य नृपात्मजौ ॥ ६८ ॥
जहार भार्यां रामस्य गृध्रं दग्ध्वा जटायुषं ॥
गृध्रं च निहतं दृष्ट्वा हृतां श्रुत्वा चमैथिलिम्॥
॥६९ ॥ राघवः शोकसंतप्तो विललापाकुलें
द्रियः ।ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायु

षम् ॥ ७० ॥ मार्गमाणो वनेसीतां राक्षसं सं
ददर्श ह ॥ कबंधं नाम रूपेण विकृतं घोरदर्श
नम् ॥७१॥ तं निहत्य महाबाहुर्ददाह स्वर्ग
तश्च सः ॥ स चास्य कथयामास शबरीं धर्म
चारिणीम्॥७२॥ श्रमणां धर्मनिपुणामभिग
च्छेति राघव ॥ सोभ्यगच्छन्महातेजाः शब
रीं शत्रुसूदनः ॥ ७३ ॥ शबर्या पूजितः सम्य
ग्रामो दशरथात्मजः ॥पंपातीरे हनुमता संग
तो वानरेण ह ॥ ७४ ॥ हनुमद्वचनाच्चैव
सुग्रीवेण समागतः ॥ सुग्रीवाय च तत्सर्वं
शंसद्रामो महाबलः ॥ ७५ ॥ आदित
स्तद्यथा वृत्तं सीतायाश्च विशेषतः ॥ सु
ग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः ॥
॥ ७६ ॥ चकार सख्यं रामेण प्रीतश्चैवाग्नि
साक्षिकम्॥ततो वानरराजेन वैरानुकथनं प्र

ति ॥ ७७ ॥ रामायावेदितं सर्वं प्रणयाद्दुःखि
तेन च ॥ प्रतिज्ञातं च रामेण तदा वालिवधं
प्रति ॥ ७८ ॥ वालिनश्च बलं तत्र कथयामा
स वानरः॥सुग्रीवः शंकितश्चासीन्नित्यं वीर्ये
ण राघवे ॥ ७९ ॥ राघवप्रत्ययार्थं तु दुंदुभेः
कायमुत्तमं ॥ दर्शयामास सुग्रीवो महापर्वत
सन्निभम् ॥ ८० ॥ उत्स्मयित्वा महाबाहुःप्रे
क्ष्य चास्थि महाबलः॥पादांगुष्ठेन चिक्षेप सं
पूर्णं दशयोजनम् ॥ ८१॥ बिभेद च पुनस्ता
लान् सप्तैकेन महेषुणा ॥ गिरिं रसातलं चैव
तनयन् प्रत्ययं तदा ॥ ८२ ॥ ततःप्रीतमना
स्तेन विश्वस्तः स महाकपिः ॥किष्किंधां रा
मसहितो जगाम च गुहां तदा ॥ ८३॥ ततो
गर्जद्धरिवरः सुग्रीवो हेमपिंगलः ॥ तेन नादे
न महता निर्जगाम हरीश्वरः ॥ ८४ ॥ अनु

मान्यं तदा तारां सुग्रीवेण समागतः ॥ निज
घान च तत्रैनं शरेणैकेन राघवः॥८५॥ततः
सुग्रीववचनाद्धत्वा वालिनमाहवे॥सुग्रीवमेव
तद्राज्ये राघवः प्रत्यपादयत्॥ ८६॥स च स
र्वान्समानीय वानरान् वानरर्षभः ॥ दिशः प्र
स्थापयामास दिदृक्षुर्जनकात्मजाम्॥८७॥त
तो गृध्रस्य वचनात्संपातेर्हनुमान् बली॥शत
योजनविस्तीर्णं पुप्लुवे लवणार्णवम्॥ ८८ ॥
तत्र लंकां समासाद्य पुरीं रावणपालिताम्॥
ददर्श सीतां ध्यायंतीमशोकवनिकागताम्॥
॥८९॥निवेदयित्वाऽभिज्ञानं प्रवृत्तिं विनिवेद्य
च॥ समाश्वास्य च वैदेहीं मर्दयामास तोरण
म् ॥९० ॥ पंचसेनाग्रगान् हत्वा सप्त मंत्रिसु
तानपि॥शूरमक्षं च निष्पिष्य ग्रहणं समुपा
गमत्॥९१॥अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वापै

तामहाद्वरात्॥मर्षयन् राक्षसान्वीरो मंत्रिण
स्तान्यदृच्छया१२॥ततो दग्ध्वापुरीं लंकामृ
ते सीतां च मैथिलीं ॥ रामाय प्रियमाख्यातुं
पुनरायान्महाकपिः॥१३॥सोऽभिगम्य महा
त्मानं कृत्वा रामं प्रदक्षिणं ॥ न्यवेदयदमेया
त्मा दृष्टा सीतेति तत्त्वतः।१४॥ततःसुग्रीवस
हितो गत्वा तीरं महोदधेः॥समुद्रं क्षोभयामा
स शरैरादित्यसन्निभैः॥१५॥दर्शयामास चा
त्मानं समुद्रः सरितां पतिः॥समुद्रवचनाच्चैव
नलं सेतुमकारयत् ॥ १६ ॥ तेन गत्वा पुरीं
लंकां हत्वा रावणमाहवे ॥रामः सीतामनुप्रा
प्य परां व्रीडामुपागमत् ॥ १७ ॥ तामुवाच
ततो रामः परुषं जनसंसदि ॥ अमृष्यमाणा
सा सीता विवेश ज्वलनं सती ॥ १८ ॥ ततो
ग्निवचनात्सीतां ज्ञात्वा विगतकल्मषाम्॥क

र्मणा तेन महता त्रैलोक्यं सचराचरम्॥९९
सदेवर्षिगणं तुष्टं राघवस्य महात्मनः ॥ बभौ
रामः संप्रहृष्टः पूजितः सर्वदैवतैः ॥१०० ॥
अभिषिच्य च लंकायां राक्षसेंद्रं विभीषणं ॥
कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह॥१॥
देवताभ्यो वरंप्राप्य समुत्थाप्य च वानरान्॥
अयोध्यां प्रस्थितो रामः पुष्पकेण सुहृद्वृतः॥
॥ २ ॥ भरद्वाजाश्रमं गत्वा रामःसत्यपराक्र
मः॥भरतस्यांतिके रामो हनूमंतं व्यसर्जयत्
॥३॥ पुनराख्यायिकां जल्पन् सुग्रीवसहित
स्तदा॥पुष्पकं तत्समारुह्य नंदिग्रामं ययौ त
दा ॥ ४ ॥ नंदिग्रामे जटां हित्वा भ्रातृभिः स
हितोऽनघः ॥ रामः सीतामनुप्राप्य राज्यं पुन
रवाप्तवान् ॥५॥ प्रहृष्टमुदितो लोकस्तुष्टः पु
ष्टः सुधार्मिकः ॥ निरामयो ह्यरोगश्च दुर्भिक्ष

भयवर्जितः ॥६ न पुत्रमरणं केचिद्द्रक्ष्यंति पुरुषाः क्वचित् ॥ नार्य्यश्चाविधवा नित्यं भविष्यंति पतिव्रताः ॥७॥ न चाग्निजं भयं किंचिन्नाप्सु मज्जंति जंतवः ॥ नवातजं भयं किंचिन्नापि ज्वरकृतं तथा ॥ ८॥न चापि क्षुद्भयं तत्र न तस्करभयं तथा॥नगराणि च राष्ट्राणि धनधान्ययुतानि च ॥ ९ ॥ नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा ॥ अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः ॥ ११० ॥ गवां कोट्ययुतं दत्त्वा विद्वद्भ्यो विधिपूर्वकं॥असंख्येयं धनं दत्त्वा ब्राह्मणेभ्यो महायशाः ॥११ ॥ राजवंशान् शतगुणान् स्थापयिष्यति राघवः ॥ चातुर्वर्ण्यं च लोकेस्मिन्स्वे स्वे धर्मे नियोक्ष्यंति॥ ॥१२॥दशवर्षसहस्राणि दशवर्षशतानि च ॥रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति

॥ १३ ॥ इदं पवित्रं पापघ्नं पुण्यं वेदैश्च संमि
तं ॥ यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते॥
॥ १४ ॥एतदाख्यानमायुष्यं पठन्रामायणं
नरः ॥ सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीय
ते ॥१५॥ पठन् द्विजो वागृषभत्वमीयात्स्या
त् क्षत्त्रियो भूमिपतित्वमीयात् ॥वणिग्जनः
पण्यफलत्वमीयाज्जनश्च शूद्रोपिमहत्त्वमीया
त् ॥ १६॥ चरितं रघुनाथस्य शतकोटिप्रवि
स्तरं॥एकैकमक्षरं पुंसां महापातकनाशनम्
॥ १७ ॥ रामाय रामभद्राय रामचंद्राय वेध
से ॥ रघुनाथाय नाथाय सीतायाः पतयेनमः
॥१९॥इ०वाल्मीकीये०सं०रामायणं॥३१॥

## अथ श्रीपांडवकृतप्रपन्नगीता

श्रीगणेशाय नमः॥ ॥श्री सरस्वत्यै नमः ।

श्रीरस्तु ॥ पांडवउवाच॥ ॥प्रह्लादनारद
पराशरपुण्डरीकव्यासाम्बरीषशुकशौनकभी
ष्मदाल्भ्यान् ॥ रुक्मांगदार्जुनवसिष्ठविभीष
णादीन्पुण्यानिमान्परमभागवतान्स्मरामि ॥
॥१॥लोमहर्षणउवाच॥धर्मो विवर्द्धति युधि
ष्ठिरकीर्तनेन पापं प्रणश्यति वृकोदरकीर्त्त
नेन॥शत्रुर्विनश्यति धनंजयकीर्त्तनेन माद्री
सुतौ कथयतां न भवंति रोगाः ॥ २ ॥ ब्रह्मो
वाच॥ये मानवा विगतरागपरावरज्ञा नाराय
णं सुरगुरुं सततं स्मरंति।ध्यानेन तेन हतक
ल्मषचेतनास्ते मातुः पयोधररसं न पुनःपि
बंति ॥३॥ इंद्र उवाच॥नारायणो नाम नरो
नराणां प्रसिद्धचोरः कथितः पृथिव्याम् ॥अ
नेकजन्मार्जितपापसंचयं हरत्यशेषं स्मरतां
सदैव ॥ ४ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ मेघ

श्यामं पीतकौशेयवासं श्रीवत्सांकं कौस्तुभो
द्भासितांगम् ॥ पुण्योपेतं पुंडरीकायताक्षं वि
ष्णुं वंदे सर्वलोकैकनाथम् ॥५॥ भीमसेनउ
वाच ॥ ॥ जलौघमग्ना सचराचरा धरा विषा
णकोट्याखिलविश्वमूर्तिना॥समुद्धृता येन व
राहरूपिणा स मे स्वयंभूर्भगवान्प्रसीदताम्
॥ ६ ॥ ॥ अर्जुनउवाच ॥ ॥ अचिंत्यमव्य
क्तमनंतमव्ययं विभुं प्रभुं भावितविश्वभावन
म् ॥ त्रैलोक्यविस्तारविचारकारकं हरिं प्रप
न्नोस्मि गतिं महात्मनाम्॥७॥ ॥नकुलउवा
च॥ ॥ यदि गमनमधस्तात्कालपाशानुबद्धो
यदि च कुलविहीने जायते पक्षिकीटे॥ कृमि
शतमपि गत्वा जायते चांतरात्मा मम भवतु
हृदिस्थे केशवे भक्तिरेका ॥ ८ ॥ ॥ सहदेवउ
वाच ॥ तस्य यज्ञवराहस्य विष्णोरतुलतेज

सः ॥ प्रणामं ये प्रकुर्वंति तेषामपि नमोनमः ॥ ९ ॥ कुंत्युवाच ॥ स्वकर्मफलनिर्दिष्टांयां यां योनिंव्रजाम्यहम् ॥ तस्यां तस्यां हृषीकेश त्वयि भक्तिर्दृढास्तु मे ॥ १० ॥ ॥ माद्र्युवाच ॥ ॥ कृष्णे रताःकृष्णमनुस्मरंति रात्रौ च कृष्णं पुनरुत्थिता ये ॥ तेभिन्नदेहाःप्रविशंति कृष्णं हविर्यथा मंत्रहुतं हुताशं ॥ ११ ॥ द्रुपद उवाच॥ ॥ कीटेषु पक्षिषु मृगेषु सरीसृपेषु रक्षःपिशाचमनुजेष्वपि यत्र तत्र॥ जातस्य मे भवतु केशव त्वत्प्रसादात्त्वय्येव भक्तिरचलाऽव्यभिचारिणी च ॥ १२ ॥ सुभद्रोवाच ॥ ॥ एकोपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः ॥दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥ १३ ॥ ॥ अभिमन्युरुवाच ॥ ॥ गोविंद गोविंद हरे मुरारे गो

विंद गोविंद मुकुंद कृष्ण ॥ गोविंद गोविंद र
थांगपाणे गोविंद गोविंद नमो नमस्ते ॥ १४
॥ धृष्टद्युम्नउवाच ॥ ॥ श्रीराम नारायण वा
सुदेव गोविंद वैकुंठ मुकुंद कृष्ण ॥ श्रीकेशवा
नंत नृसिंह विष्णो मांत्राहि संसारभुजंगदष्ट
म् ॥ १५ ॥ सात्यकिरुवाच ॥ ॥ अप्रमेय
हरे विष्णो कृष्ण दामोदराच्युत ॥ गोविंदानं
त सर्वेश वासुदेव नमोस्तुते ॥ १६ ॥ ॥ उ
द्धवउवाच ॥ ॥ वासुदेवं परित्यज्य येऽन्यं
देवमुपासते ॥ तृषिता जान्हवीतीरे मार्गंते
वापिकां खलाः ॥ १७ ॥ ॥ धौम्यउवाच ॥
अपां समीपे शयनासनस्थितौ दिवा च रा
त्रौ च यथाधिगच्छता ॥ यद्यास्ति किंचित्सुकृ
तं कृतं मया जनार्दनस्तेन कृतेन तुष्यतु ॥
॥ १८ ॥ ॥ संजयउवाच ॥ ॥ आर्ता विष

ण्णाः शिथिलाश्च भीता घोरेषु व्याघ्रादिषु
वर्त्तमानाः ॥ संकीर्त्य नारायणशब्दमात्रं वि
मुक्तदुःखाः सुखिनो भवंति ॥ १९ ॥ अक्रूरउ
वाच ॥ ॥ अहं हि नारायणदासदासदासानु
दासस्य च दासदासः ।अस्त्यन्य ईशो जगतो
नराणां तस्मादहं चान्यतरोस्मिलोके॥ २०
विदुरउवाच ॥ ॥ वासुदेवस्य ये भक्ताः शां
तास्तद्गतमानसाः ॥तेषां दासस्य दासोहम
भूवं जन्मजन्मनि ॥ २१॥ भीष्मउवाच ॥ ॥
विपरीतेषु कालेषु परिक्षीणेषु बंधुषु ॥ त्राहि
मां कृपया कृष्ण शरणागतवत्सल ॥ २२ ॥
द्रोणाचार्यउवाच॥ये ये हताश्चक्रधरेण राजं
स्त्रैलोक्यनाथेन जनार्दनेन॥ते ते नरा विष्णु
पुरं प्रयाताः क्रोधोपि देवस्य वरेण तुल्यः॥
॥ २३ ॥ कृपाचार्यउ० ॥मज्जन्मनःफलमिदं

मधुकैटभारे मत्प्रार्थनीयमदनुग्रहएषएव ॥
त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्यभृत्यस्यभृ
त्य इति मां स्मर लोकनाथ॥२४॥ अश्वत्था
मोवाच ॥ ॥ गोविंद केशव जनार्दन वासुदे
व विश्वेश विश्व मधुसूदन विश्वनाथ ॥ श्रीप
द्मनाभ पुरुषोत्तम पुष्कराक्ष नारायणाच्युत
नृसिंह नमो नमस्ते ॥ २५ ॥ ॥ कर्णउ
वाच ॥ नान्यं वदामि न शृणोमि न चिंतया
मि नान्यं स्मरामि न भजामि न चाश्रयामि
॥ भक्त्या त्वदीयचरणांबुजमादरेण श्रीश्री
निवास पुरुषोत्तम देहि दास्यम् ॥ २६ ॥
॥ धृतराष्ट्रउवाच ॥ ॥ नमोनमः कारण
वामनाय नारायणायामितविक्रमाय ॥ श्री
शार्ङ्गचक्राब्जगदाधराय नमोस्तु तस्मैपुरुषो
त्तमाय ॥ २७॥ ॥ गांधार्युवाच ॥ ॥

त्वमेव माता च पिता त्वमेव त्वमेव बंधुश्च स
खा त्वमेव ॥ त्वमेव विद्या द्रविणं त्वमेव त्व
मेव सर्वं मम देवदेव ॥ २८ ॥ द्रौपद्युवाच ॥
यज्ञेशाच्युत गोविंद माधवानंत केशव ॥ कृ
ष्ण विष्णो हृषीकेश वासुदेव नमोस्तुते २९
जयद्रथउवाच॥ ॥ नमःकृष्णाय देवाय ब्रह्म
णेऽनंतमूर्त्तये ॥ योगेश्वराय योगाय त्वामहं
शरणं गतः ॥ ३० ॥ विकर्णउवाच ॥ ॥ कृ
ष्णाय वासुदेवाय देवकीनंदनायच॥ नंदगो
पकुमाराय गोविंदाय नमोनमः ॥ ३१ ॥ ॥
सोमदत्तउवाच॥ ॥ नमः परमकल्याण नम
स्ते विश्वभावन ॥वासुदेवाय शांताय यदूनां
पतये नमः ॥ ३२ ॥ ॥ विराटउवाच ॥ ॥न
मो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च॥ जग
द्धिताय कृष्णाय गोविंदाय नमोनमः॥३३॥

शल्यंउवाच ॥ ॥ अतसीपुष्पसंकाशं पीतवा
ससमच्युतम्॥ ये नमस्यंति गोविंदं न तेषां
विद्यते भयम् ॥ ३४॥ बलभद्रउवाच ॥ ॥कृ
ष्ण कृष्ण कृपालुस्त्वमगतीनां गतिर्भव ॥ सं
सारार्णवमग्नानां प्रसीद पुरुषोत्तम ॥ ३५ ॥
श्रीकृष्णउवाच।कृष्णकृष्णेति कृष्णेति यो मां
स्मरति नित्यशः॥जलं भित्त्वा यथा पद्मं नर
कादुद्धराम्यहम् ॥३६॥सत्यं ब्रवीमि मनुजाः
स्वयमूर्ध्वबाहुर्योमां मुकुंद नरसिंह जनार्दने
ति॥जीवो जपत्यनुदिनं मरणे रणे वा पाषाण
काष्ठसदृशाय ददाम्यभीष्टम् ॥३७॥सूतउवा
च ॥ ॥ तत्रैव गंगा यमुना च वेणी गोदावरी
सिंधुसरस्वतीच ॥सर्वाणि तीर्थानि वसंति त
त्र यत्राच्युतोदारकथाप्रसंगः ॥ ३८॥ यमउ
वाच ॥ नरके पच्यमानस्तु यमेन परि भाषि

तः॥ किं त्वया नार्चितो देवः केशवः क्लेशनाश
नः॥ ३९॥ ॥ नारद उवाच॥ जन्मांतरसहस्रे
ण तपोध्यानसमाधिभिः॥ नराणां क्षीणपा
पानां कृष्णे भक्तिः प्रजायते॥ ४०॥ ॥प्रह्ला
द उवाच॥ ॥ नाथ योनिसहस्रेषु येषु येषु व्र
जाम्यहम्॥ तेषु तेष्वचला भक्तिरच्युतास्तु
सदा त्वयि॥ ४१॥ या प्रीतिरविवेकानां वि
षयेष्वनपायिनी॥ त्वामनुस्मरतः सा मे हृद
यान्नापसर्पतु॥ ४२॥ ॥विश्वामित्र उवाच॥
किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः
॥ यो नित्यं ध्यायते देवं नराणां मनसि स्थित
म्॥ ४३॥ जमदग्निरुवाच॥ नित्योत्सवस्स
दा तेषां नित्या श्रीर्नित्यमंगलम्॥ येषां हृदि
स्थो भगवान्मंगलायतनं हरिः॥ ४४॥ भरद्वा
ज उवाच॥ लाभस्तेषां जयस्तेषां कुतस्तेषां

पराजयः ॥ येषामिंदीवरश्यामो हृदयस्थोज
नार्दनः ॥४५॥ ॥गौतमउवाच॥ ॥गोकोटि
दानं ग्रहणेषु काशीप्रयागगंगायुतकल्पवा
सः ॥ यज्ञायुतं मेरुसुवर्णदानं गोविंदनाम्ना
न समं न तुल्यम् ॥ ४६॥ अत्रिरुवाच ॥ गो
विंदेति सदा स्नानं गोविंदेति सदा जपः ॥गो
विंदेति सदा ध्यानं सदा गोविंदकीर्त्तनम् ॥
॥ ४७॥ अक्षरं हि परं ब्रह्म गोविंदेत्यक्षर
त्रयम् ॥ तस्मादुच्चारितं येन ब्रह्मभूयाय क
ल्पते॥४८॥श्रीशुकउवाच ॥ ॥ अच्युतःक
ल्पवृक्षोसावनंतः कामधेनवः ॥ चिंताम
णिश्च गोविंदो हरिनाम विचिंतयेत् ॥ ४९॥
हरिरुवाच॥जयतिजयति देवो देवकीनंदनो
यं जयति जयतिकृष्णोवृष्णिवंशप्रदीपः॥जय
तिजयति मेघश्यामलः कोमलांगो जयति

जयति पृथ्वीभारनाशो मुकुंदः ।५० ।पिप्पला
यनउवाच ॥ ॥ श्रीमन्नृसिंहविभवे गरुडध्व
जाय तापत्रयोपशमनाय भवौषधाय ॥ कृष्णा
य वृश्चिकजलाग्निभुजंगरोगक्लेशव्ययाय ह
रये गुरवे नमस्ते ॥५१॥ आविर्होत्रउवाच ॥
कृष्ण त्वदीयपदपंकजपंजरांते अद्यैव मे वि
शतु मानसराजहंसः ॥ प्राणप्रयाणसमये
कफवातपित्तैः कंठावरोधनविधौ स्मरणं कु
तस्ते ॥५२ ॥ ॥ विदुरउवाच ॥ ॥ हरेर्नामै
व नामैव नामैव मम जीवनम् ॥ कलौ नास्त्य
व नास्त्येव नास्त्येव गतिरन्यथा ॥ ५३ ॥ व
सिष्ठउवाच ॥ ॥ कृष्णेति मंगलं नाम यस्य
वाचि प्रवर्त्तते ॥ भस्मीभवंति तस्याशु महा
पातककोटयः ॥५४॥ ॥अरुंधत्युवाच॥ ॥
कृष्णाय वासुदेवाय हरये परमात्मने ॥ प्रणत

क्लेशनाशाय गोविंदाय नमोनमः ॥५५॥ ॥ कश्यपउवाच ॥ ॥कृष्णानुस्मरणादेव पाप संघातपंजरः ॥ शतधा भेदमाप्नोति गिरिर्व ज्रहतो यथा॥५६॥ ॥दुर्योधनउवाच ॥ ॥ जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः ॥ केनापि देवेन हृदि स्थितेन यथा नियुक्तोस्मि तथा करोमि ॥५७॥ येन स्वगुणदोषेण क्षम्यतां मधुसूदनः ॥ अहमेव महं हंतुं मम दोषो न विद्यते ॥५८॥ भृगुरु वाच ॥ ॥ नामैव तव गोविंद नाम त्वत्तः श ताधिकम् ॥ददात्युच्चारणान्मुक्तिं विनाप्यष्टां गयोगतः ॥५९॥ लोमहर्षणउवाच॥ ॥न मामि नारायणपादपंकजं करोमि नारायण पूजनं सदा ॥ वदामि नारायणनाम निर्मलं स्मरामि नारायणतत्त्वमव्ययम्॥६०॥॥शौ

नकउवाच॥ ॥स्मृते सकलकल्याणभाजनं
यत्र जायते ॥पुरुषं तमजं नित्यं व्रजामि शर
णं हरिम्॥६१॥गर्गउवाच ॥ ॥नारायणेति
मंत्रोस्ति वागस्ति वशवर्तिनी ॥ तथापि नर
के घोरे पतंतीत्येतदद्भुतं॥६२॥ ॥दाल्भ्यउ
वाच ॥किं तस्य बहुभिर्मंत्रैर्भक्तिर्यस्य जनार्द
ने ॥ नमोनारायणायेति मंत्रः सर्वार्थसाध
कः॥६३॥वैशंपायनउवाच ॥ ॥ यत्र योगे
श्वरः कृष्णो यत्र पार्थो धनुर्धरः॥तत्र श्रीर्विज
यो भूतिर्ध्रुवा नीतिर्मतिर्मम॥६४॥ ॥ अंगि
राउवाच ॥ ॥ हरिर्हरति पापानि दुष्टचित्तैर
पि स्मृतः ॥ अनिच्छयापि संस्पृष्टो दहत्येव
हि पावकः॥६५॥ ॥पराशरउवाच ॥ ॥ स
कृदुच्चरितं येन हरिरित्यक्षरद्वयम् ॥ बद्धः प
रिकरस्तेन मोक्षाय गमनं प्रति॥ ६६ ॥ पौ

लस्त्यउवाच॥ ॥ हे जिह्वे रससारज्ञे सर्वदा मधुरप्रिये॥ नारायणाख्यपीयूषं पिब जिह्वे निरंतरम्॥६७॥ ॥व्यासउवाच॥ सत्यं सत्यं पुनः सत्यं भुजमुत्थाप्य चोच्यते॥ न वेदाच्च परं शास्त्रंनदेवःकेशवात्परः।६८॥ ॥धन्वंतरिरुवाच॥ ॥ अच्युतानंतगोविंदनामोच्चारणभेषजात् ॥ नश्यंति सकला रोगाःसत्यं सत्यं वदाम्यहम्॥६९॥मार्कंडेयउवाच॥ सा हानिस्तन्महच्छिद्रं सा चांधजडमूढता॥ यन्मुहूर्त्तं क्षणं वापि वासुदेवं न चिंतयेत्७० ॥ अगस्त्यउवाच ॥ ॥ निमिषं निमिषार्द्धं वा प्राणिनां विष्णुचिंतनम् ॥ क्रतुकोटिसहस्राणां ध्यानमेकं विशिष्यते॥ ७१ ॥मनसा कर्मणा वाचा ये स्मरंति जनार्दनम् ॥तत्र तत्र कुरुक्षेत्रं प्रयागो नैमिषं वनम् ॥ ७२ ॥

श्रीशुकउवाच ॥ ॥ आलोड्य सर्वशास्त्राणि विचार्यैव पुनःपुनः ॥ इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ ७३ ॥ श्रीमहादेवउवाच॥शरीरं च नवच्छिद्रं व्याधिग्रस्तं कलेवरम् ॥ औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः ॥ ७४ ॥ ॥ शौनकउवाच॥ ॥भोजनाच्छादने चिंतां वृथा कुर्वंति वैष्णवाः॥योसौ विश्वंभरो देवः स भक्तान् किमुपेक्षते ॥ ७५॥ एवं ब्रह्मादयो देवा ऋषयश्च तपोधनाः ॥ कीर्तयंति सुरश्रेष्ठं देवं नारायणं विभुम्॥७६॥॥सनत्कुमारउवाच ॥ ॥यस्य हस्ते गदाचक्रे गरुडो यस्य वाहनं॥शंखः करतले यस्य स मे विष्णुः प्रसीदतु॥७७॥इदं पवित्रमायुष्यं पुण्यं पापप्रणाशनम् ॥ यः पठेत्प्रातरुत्थाय वैष्णवं स्तोत्रमुत्तमम् ॥ ७८॥ सर्वपापविनिर्मु

क्तो विष्णुसायुज्यमाप्नुयात् ॥ धर्मार्थकाममो
क्षार्थं पांडवैः परिकीर्त्तितम्॥७९॥ आकाशा
त्पतितं तोयं यथा गच्छति सागरम्॥सर्वदेव
नमस्कारः केशवं प्रति गच्छति॥ ८० ॥इति
श्रीपांडवकृतप्रपन्नगीता संपूर्णा ॥ श्रीकृष्णा
र्पणमस्तु ॥ शुभंभवंतु ॥ ३२ ॥ ॥ ७ ॥

## श्रीविष्णोरष्टोत्तरशतस्थानानि

श्रीमते रामानुजाय नमः॥अष्टोतरशतस्था
नेष्वाविर्भूतं जगत्पतिं ॥नमामि जगतामीशं
नारायणमनन्यधीः ॥ १॥ श्रीवैकुंठे वासुदेव
मामोदे कर्षणाव्हयं ॥ प्रद्युम्नं च प्रमोदाख्ये
संमोदे चानिरुद्धकं ॥२॥ सत्यलोके तथा वि
ष्णुं पद्माक्षं सूर्यमंडले ॥ क्षीराब्धौ शेषशयनं
श्वेतद्वीपे तु तारकं॥३॥नारायणं बदर्याख्ये

नैमिशे हरिमव्ययं ॥ शालग्रामं हरिक्षेत्रे अ
योध्यायां रघूत्तमं ॥४॥ मथुरायां बालकृष्णं
मायायां मधुसूदनं ॥काश्यां तु भोगशयनम
वंत्यामवनीपतिं ॥ ५ ॥ द्वारवत्यां यादवेंद्रं व्र
जे गोपीजनप्रियं ॥ वृंदावने नंदसूनुं गोविंदं
कालियन्हदे ॥ ६ ॥ गोवर्धने गोपवेषं भवघ्नं
भक्तवत्सलं ॥ रोमंथपर्वते शौरिं हरिद्वारे ज
गत्पतिं ॥ ७ ॥ प्रयागे माधवं चैव गयायां तु
गदाधरं॥गंगासागरगे विष्णुं चित्रकूटे तु रा
घवं ॥ ८ ॥ नंदिग्रामे राक्षसघ्नं प्रभासे विश्व
रूपिणं ॥श्रीकूर्मे कूर्ममचलं नीलाद्रौ पुरुषो
त्तमं ॥ ९ ॥ सिंहाचले महासिंहं गदिनं तुल
सीवने॥घृतशैले पापहरं श्वेताद्रौ सिंहरूपि
णं ॥१०॥ योगानंदं धर्मपुर्यां काकुले त्वांध्र
नायकं ॥ अहोबले गारुडाद्रौ हिरण्यासुरम

दनं ॥११॥ विट्ठलं पांडुरंगे तु वेंकटाद्रौ रमा
सखं॥नारायणं यादवाद्रौ नृसिंहं घटिकाच
ले१२वरदं वारणगिरौ कांच्यां कमललोच
नं।यथोक्तकारिणं चैव परमेशपुराश्रयं।१३॥
पांडवानां तथा दूतं त्रिविक्रममथोन्नतं ॥ का
मासिक्यां नृसिंहं च तथाष्टभुजसंज्ञकं।१४॥
मेघाकारं शुभाकारं शेषाकारं तु शोभनं ॥ अं
तरा शितिकंठस्य कामकोट्यां शुभप्रदं१५।
कालमेघं खगारूढं कोटिसूर्यसमप्रभं॥दिव्यं
दीपप्रकाशं च देवानामधिपं मुने ॥१६॥ प्र
वालवर्णं दीपाभं कांच्यामष्टादशास्थिताः ॥
श्रीगृध्रसरसस्तीरे भांतं विजयराघवं१७॥वी
क्षारण्ये महापुण्ये शयानं वीरराघवं ॥ तोता
द्रौ तुंगशयनं गजार्तिघ्नं गजस्थले ॥१८॥म
हाबलिं बलिपुरे भक्तिसारे जगत्पतिं ॥ महा

वराहं श्रीमुष्णे महींद्रे पद्मलोचनं॥ १९ ॥ श्री
रंगे तु जगन्नाथं श्रीधामे जानकीप्रियं ॥ सार
क्षेत्रे सारनाथं खंडने हरचापहं ॥ २० ॥ श्री
निवासस्थले पूर्णं सुवर्णं स्वर्णमंदिरे ॥ व्याघ्र
पुर्यां महाविष्णुं भक्तिस्थाने तु मुक्तिदं॥ २१॥
श्वेतह्रदे शांतमूर्तिमग्निपुर्यां सुरप्रियं॥ भर्गा
ख्यं भार्गवस्थाने वैकुण्ठाख्ये तु माधवं२२॥
पुरुषोत्तमे भक्तसखं चक्रतीर्थे सुदर्शनं ॥ कुं
भकोणे चक्रपाणिं भूतस्थाने तु शार्ङ्गिणं२३॥
कपिस्थले गजार्तिघ्नं गोविंदं चित्रकूटके॥ अ
नुत्तमं चोत्तमायां श्वेताद्रौ पद्मलोचनं २४॥
पार्थस्थले परब्रह्म कृष्णकोटयां मधुद्विषं॥ नं
दपुर्यां महानंदं वृद्धपुर्यां वृषाश्रयं ॥ २५ ॥
असंगं संगमग्रामे शरण्ये शरणं महत्॥ दक्षि
णद्वारकायां तु गोपालं जगतां पतिं ॥ २६ ॥

सिंहक्षेत्रे महासिंहं मल्लारिं मणिमंडपे । निबि
डे निबिडाकारं धानुष्के जगदीश्वरं ॥ २७ ॥
मौहूरे कालमेघं तु मधुरायां तु सुंदरं ॥ वृष
भाद्रौ महापुण्ये परमस्वामिसंज्ञकं ॥ २८ ॥
श्रीमद्वरगुणे नाथं कुरुकायां रमासखं ॥ गो
ष्ठीपुरे गोष्ठपतिं शयानं दर्भसंस्तरे ॥२९॥ध
न्वी मंगलके शौरिं बलाढ्यं भ्रमरस्थले ॥कुरं
गे तु तथा पूर्णं कृष्णमेकं वटस्थले ॥ ३० ॥
अच्युतं क्षुद्रनद्यां तु पद्मनाभमनंतके॥एता
नि विष्णोः स्थानानि पूजितानि महात्मभिः
॥३१॥ अधिष्ठितानि देवेश तत्रासीनं च मा
धवं॥यः स्मरेत्सततं भक्त्या चेतसाऽनन्यगा
मिना॥३२॥सविधूयातिसंसारबंधं याति हरेः
पदं ॥ अष्टोत्तरशतं विष्णोः स्थानानिपठति
स्वयं३३॥अधीताः सकला वेदाः कृताश्च वि

विधा मखाः॥संपादिता तथा मुक्तिः परमानं
ददायिनी॥ अवगाढानि तीर्थानि ज्ञातः स भ
गवान् हरिः॥३४॥ आद्यमेतत्स्वयं व्यक्तं वि
मानंरंगसंज्ञकं ॥ श्रीमुष्णं वेंकटाद्रिं च शाल
ग्रामं च नैमिशम्।३५॥तोताद्रिं पुष्करं चैव
नरनारायणाश्रमम् ॥ अष्टौ मे मूर्तयः संति
स्वयं व्यक्ता महीतले३६॥श्रीकृष्णार्प० ३३

## कनकधाराश्रीलक्ष्मीस्तवराजः

श्रीमते रामानुजाय नमः ॥ श्रीमान्वेंकटना
थार्य्यः कवितार्किककेसरी॥ वेदान्ताचार्य्य
वर्य्यो मे सन्निधत्तां सदाहृदि ॥ १ ॥ ईशा
नां जगतोऽस्य वेंकटपतेर्विष्णोः परां प्रेयसीं
तद्वक्षःस्थलनित्यवासरसिकां तत्क्षान्तिसंव
र्द्धनीं॥पद्मालंकृतपाणिपल्लवयुतां पद्मासन

स्थां श्रियं वात्सल्यादिगुणोज्ज्वलां भगवतीं वन्दे जगन्मातरम् ॥ २ ॥ मानातीतप्रथितविभवां मंगलं मङ्गलानां वक्षःपीठीं मधुविजयिनो भूषयंतीं स्वकान्त्या ॥ प्रत्यक्षानुश्रविकमहिमप्रार्थनीनां प्रजानां श्रेयोमूर्तिं श्रियमशरणस्त्वां शरण्यां प्रपद्ये ॥ ३ ॥ आविर्भावः कलशजलधावध्वरे वाऽपि यस्याः स्थानं यस्याः सरसिजवनं विष्णुवक्षःस्थलं वा॥ भूमा यस्या भुवनमखिलं देवि दिव्यं पदं वा स्तोकप्रज्ञैरनवधिगुणा स्तूयसे सा कथंत्वम् ॥ ४ ॥ स्तोतव्यत्वं दिशति भवती देहिभिः स्तूयमाना तामेव त्वामतितरगतिः स्तोतुमाशंसमानः ॥ सिद्धारम्भः सकलभुवनश्लाघनीयो भवेयं सेवापेक्षा तव चरणयोः श्रेयसे कस्य न स्यात् ॥ ५ ॥ यत्संकल्पाद्भवति कमले

यत्र देहिन्यमीषां जन्मस्थानप्रलयरचनाजंगमाजंगमानाम् ॥ तत्कल्याणं किमपि यमिनामेकलक्ष्यं समाधौ पूर्णं तेजस्स्फुरति भवतीपादलाक्षारसांकम् ॥ ६ ॥ निष्प्रत्यूहप्रणयघटितं देवि नित्यानपायं विष्णुस्त्वं चेत्यनवधिगुणैर्द्वंद्वमन्योन्यलक्ष्यम् ॥ शेषश्चित्तं विमलमनसां मौलयश्च श्रुतीनां संपद्यन्ते विहरणविधौ यस्य शय्याविशेषाः ॥ ७ ॥ उद्देशत्वं जननि भजतोरुज्झितोपाधिगंधं प्रत्यग्रूपेहविषि युवयोरेकशेषित्वयोगात् ॥ पद्मे पत्युस्तवच निगमैर्नित्यमन्विष्यमाणो नावच्छेदं भजति महिमा नर्त्तयन्मानसं नः ८ ॥ पश्यंतीषु श्रुतिषु परितः सूरिवृन्देन सार्द्धम्मध्ये कृत्यं त्रिगुणफलकं निर्मितस्थानभेदम् ॥ विश्वाधीशं प्रणयिनि सदा विभ्रमद्यूतवृत्तौ ब्रह्मे

शाद्या दधाति युवयोरक्षसारप्रचारम् ॥ ९ ॥ अ
स्येशाना त्वमसि जगतः संश्रयन्ती मुकुन्दं
लक्ष्मीः पद्मा जलधितनया विष्णुपत्नींदिरे
ति ॥ यन्नामानि श्रुतिपरिमलान्येवमावर्त्तय
न्तो नावर्त्तंते दुरितपवनप्रेरिते जन्मचक्रे ॥
१० त्वामेवाहुः कतिचिदपरे त्वत्प्रियं लोकना
थं किन्तैरन्तः कलहमलिनैः किञ्चिदुत्तीर्य्य
मग्नैः ॥ तत्संप्रीत्यै विहरति हरौ सम्मुखीनां
श्रुतीनां भावारूढौ भगवति युवां दैवतन्द
म्पती नः ॥ ११ ॥ आपन्नार्त्तिप्रशमनविधौ
बद्धदीक्षस्य विष्णोराचख्युस्त्वां प्रियसहच
रीमैकमत्योपपन्नाम् ॥ प्रादुर्भावैरपि समत
नुः प्राप्तमुन्नीयसे त्वं दूरोत्क्षिप्तैरिव मधुरता
दुग्धराशेस्तरङ्गैः ॥ १२ ॥ धत्ते शोभां हरिम
रकते तावकी मूर्तिराद्या तन्वी तुङ्गस्तनभर

नता तप्तजाम्बूनदाभा ॥ यस्यां गच्छंत्युद
यविलयैर्नित्यमानन्दसिन्धावुत्पद्यन्ते लोलि
तलहरीविभ्रमं व्यक्तयस्ते ॥ १३ ॥ आसं
सारं विततमखिलं वाङ्मयं यद्विभूतिर्यद्भ्रूभं
गात्कुसुमधनुषः किंकरो मेरुधन्वा ॥ यस्यां
नित्यं नयनशतकैरेकलक्ष्यो महेन्द्रः पद्मे
तासां परिणतिरसौ भावलेशैस्त्वदीयैः ॥
॥१४॥अग्रे भर्तुः सरसिजमये भद्रपीठेनिष
ण्णामम्भोराशेरधिगतसुधासम्प्लवादुत्थितां
त्वाम् ॥पुष्पासारस्थगितभुवनैः पुष्कलावर्त्त
कार्य्यैर्दीप्तारंभाः कनककलशैरभ्यषिञ्चन्नग
जेन्द्राः ॥१५॥ आलोक्य त्वाममृतसहजेवि
ष्णुवक्षःस्थलस्थां शापाक्रान्ताः शरणमगम
न् सावरोधाः सुरेन्द्राः ॥ लब्ध्वाभूयस्त्रिभुव
नमिदं रक्षितं त्वत्कटाक्षैः सर्वाकारस्थिरसमु

दयां सम्पदं निर्विशन्ति ॥ १६ ॥ आर्त्तत्राण
व्रतिभिरमृतासारनिम्नाम्बुवाहैरंभोजानामु
षसि मिषतामन्तरङ्गैरपाङ्गैः ॥ यस्यां यस्यां
दिशि विहरते देवि दृष्टिस्त्वदीया तस्या त
स्यामहमहमिकां तन्वते सम्पदोघाः ॥१७॥
योगारम्भत्वरितमनसो युष्मदेकान्तयुक्तं ध
र्म्मं प्राप्तं प्रथममिह ये धारयन्ते धनाय ॥ ते
षां भूमेर्धनपतिगृहादम्बरादम्बुधेर्वा धारानि
र्यान्त्यधिकमधिकं वांछितानां वसूनाम्१८॥
श्रेयस्कामाःकमलनिलये चित्रमाम्नायवाचां
चूडापीठं तव पदयुगं चेतसा धारयन्तः ॥छ
त्रच्छायासुभगशिरसश्चामरस्मेरपार्श्वाः श्ला
घाशब्दश्रवणमुदितास्स्त्रग्विणस्सञ्चरन्ति ॥
॥१९॥ऊरीकर्तुं कुशलमखिलं जेतुमादीन
रातीन् दूरीकर्तुं दुरितमखिलं त्यक्तुमाद्याम

विद्याम् ॥ ब्रह्मस्तम्भावधिकजननं ग्रामसी मान्तरेखामालम्बन्ते विमलमनसो विष्णु कान्ते दयान्ते ॥२०॥ जाताकांक्षाजननि यु वयोरेकसेवाधिकारेमायालीढंविभवमखिलं मन्यमानास्तृणाय॥प्रीत्यै विष्णोस्तव च कृ तिनःप्रीतिमन्तोभजंते वेलाभंगप्रशमनफलं वैदिकं धर्मसेतुम् ॥ २१॥ सेवेदेवि त्रिदशम हिलामौलिमालार्चितं ते सिद्धिक्षेत्रं शमित विपदां सम्पदां पादपद्मम् ॥ यस्मिन्नीषन्न मितशिरसोज्ञापयित्वा शरीरं वर्तिष्यन्ते वि तमसि पदे वासुदेवस्य धन्याः ॥२२ ॥ सानु प्रायप्रकटितदयैः शान्तवात्सल्यदिग्धैरम्भः स्निग्धैरमृतलहरीलब्धसद्ब्रह्मचर्य्यैः ॥ घर्मे तापत्रयविरचिते गाढतप्तं क्षणं मामाकिंच न्यग्लपितमनघैराद्रियेथाःकटाक्षैः॥२३॥सं

पद्यन्ते भवभयतमीभानवस्त्वत्प्रसादाद्भावा
स्सर्वे भगवति हरौ भक्तिमुद्वेलयन्तः ॥ याचे
किन्त्वामहमिह यतःशीतलोदारशीलांभूयो
भूयो दिशसि महतां मङ्गलानां प्रबन्धान् ॥
॥२४॥ माता देवि त्वमसि कमले वासुदेवः
पिता मे जातस्सोहं जननि युवयोरेकलक्ष्यं
दयायाः ॥ दत्तो युष्मत्परिजनतया देशिकैर
प्यतस्त्वं किन्ते भूयः प्रियमिति किल स्मेरव
क्त्रा विभासि ॥२५॥ कल्याणानामविकलनि
धिः कापि कारुण्यसीमा नित्यामोदा निगम
वचसां मौलिमंदारमाला ॥ संपद्दिव्या मधुवि
जयिनः सन्निधत्तां सदा मे सैषा देवी सकल
भुवनप्रार्थनाकामधेनुः ॥२६ ॥ उपचितगुरु
भक्तेरुत्थितं वेंकटेशात् कलिकलुषनिवृत्त्यै
कल्प्यमानं प्रजानाम् ॥ सरसिजनिलयायाः

स्तोत्रमेतत्पठन्तःसकलकुशलसीमासार्वभौ
मा भवन्ति ॥ २७ ॥ कवितार्किकसिंहाय क
ल्याणगुणशालिने ॥ श्रीमते वेंकटेशाय वेदा
न्तगुरवे नमः॥२८॥इतिश्रीकवितार्किकसिं
हस्य सर्वतंत्रस्वतंत्रस्य श्रीमद्वेंकटनाथस्य
वेदान्ताचार्य्यस्य कृतिषु कनकधाराश्रील
क्ष्मीस्तवराजः सम्पूर्णः ॥ ॥ ३४ ॥ ॥

## रामानुजसुप्रभातम्.

श्रीमते रामानुजाय नमः॥पूर्णार्यं पूर्णकरु
णापरिलब्धबोधवैराग्यभक्तिमुखदिव्यगुणा
मृताब्धे॥श्रीयामुनार्यपदपंकजराजहंसरामा
नुजार्य भगवंस्तव सुप्रभातम् १॥आनेतुमद्य
वरदस्य गजाद्रिभर्तुः पानीयमच्छमतिशीत
मगाधकूपात्॥ध्वान्तं निरस्तमरुणस्य करैः

समन्ताद्रामानुजार्य भगवंस्तव सुप्रभातम्
॥२॥ श्रीरंगराजपदपंकजयोरशेषकैंकर्यमा
कलयितुं सकुतूहलस्त्वम्॥उत्तिष्ठ नित्यवि
धिमप्यखिलं च कर्त्तुं रामानुजार्य भगवंस्तव
सुप्रभातम् ॥३॥ श्रीभाष्यमालिखितुमत्रवि
शाललेख्यःश्रीवत्सचिन्हगुरुरानतदिव्यगा
त्रः ॥ वेदांतसूत्रमपि वक्तुममुष्य सर्वमुत्तिष्ठ
लक्ष्मणमुने तव सुप्रभातम् ॥ ४ ॥ गद्यत्रयं
निगमशेखरदीपसारं श्रुत्यर्थसंग्रहमपि प्र
थितं च नित्यम्॥गीतार्थभाष्यमपि देशिकपुं
गवानां दातुं प्रसीद यतिशेखर सुप्रभातम् ॥
॥५।आराधनं रचयितुं कमलासखस्य श्रीया
दवाचलपतेर्विविधोपचारैः॥ पातुं च दृष्टिक-
मलेन नतानशेषान् रामानुजार्य भगवंस्तव
सुप्रभातम् ॥ ६ ॥ श्रीमान्स पूर्णपटुरादरतः

प्रगृह्य श्रीपादुके यतिपतेः पदयोः प्रयोक्तुम् ॥ द्वारि स्थितिं विदधते विनतार्तिहारी रामानुजार्य भगवंस्तव सुप्रभातम् ॥ ७॥ काषाय वस्त्रकटिसूत्रकमंडलूंश्च श्रीदंतकाष्ठमपि देशिकसार्वभौम ॥ पाणौ निधाय निवसंति विशुद्धगात्रा रामानुजार्य भगवंस्तव सुप्रभातम्॥८॥स्नातुं कवेरतनयासलिलेषु शिष्यैराचार्यपूरुषवरैर्यतिभिर्विशुद्धैः ॥ श्रीवैष्णवैश्च विबुधैः सहसेव्यमान रामानुजार्य भगवंस्तव सुप्रभातम् ॥ ९ ॥ ब्राह्मे विबुद्ध्य विबुधाः स्वगुरून्प्रणम्य रामानुजाय नम इत्यसकृद्ब्रुवाणाः ॥ अष्टाक्षरं सचरमं द्वयमुच्चरंति रामानुजार्य भगवंस्तव सुप्रभातम् ॥ १० ॥ संसेव्य सप्तशतसंयमिसार्वभौमैस्सद्देशिकैः सकलशास्त्रविदां वरिष्ठैः ॥ एकांतिभिः परमभा

गवतैर्निषेव्य रामानुजार्य भगवंस्तव सुप्रभातम्॥ ११ ॥ प्रातः पठंति परमद्राविडप्रपन्न गायत्रमंत्रशतमष्टशिरस्कमर्थान्॥ श्रीरं्ग वास्तवपदाब्जनिविष्टभारा रामानुजार्य भगवंस्तव सुप्रभातम्॥१२॥ इत्यादरेण सततं शुभसुप्रभातं ये मानवाः परिपठंति गुरुप्रभावम्॥ ते यांति विष्णुपदवीं निजजन्मनाशाद्रामानुजार्यपदपंकजयोः प्रभावात् १३॥ व्यासो वा भगवान् पराशरमुनिः श्रीशौनको वाथवा साक्षान्नारदसंयमी शठरिपुर्वागीश्वरो वा स्वयम्॥ लोकेशः पुरुषोत्तमःफणिपतिः शेषो जगच्छेषिण इत्याख्यो जगतां हिताय समभूद्रामानुजार्यो मुनिः ॥१४॥ इति रामानुजसुप्रभातं सम्पूर्णम्॥ श्रीमद्रामानुजार्यणमस्तु॥ ॥ शुभंभवतु॥ ३५॥ ॥छ॥

 ॥ वैराग्यपंचकम् ॥

श्रीमते रामानुजाय: ॥ शिलं किमनलं भवेदनलमौदरंबाधितुं पयःप्रसृतिपूरकं किमु न धारकं सारसम् ॥ अयत्नमलमल्पकं पथिपटच्चरं कच्चरं भजंति विबुधामुधा अहहकुक्षितः कुक्षितः ॥१॥ दुरीश्वरद्वारबहिर्वितर्दिकादुरासिकायै रचितोयमंजलिः ॥ यदंजनाभं निरपायमस्ति नो धनंजयस्यंदनभूषणं धनम्॥२॥काचाय नीचं कमनीयवाचा मोचाफलस्वादमुचा न याचे ॥ दयाकुचेले धनदत्कुचेले स्थितेऽकुचेले श्रितमाकुचेले ॥३॥ क्षोणीकोणशतांशपालनखलदुर्वारगर्वानल-क्षुभ्यत्क्षुद्रनरेंद्रचाटुरचनां धन्यां न मन्यामहे ॥देवं सेवितुमेव निश्चिनुमहे योसौ दयालुःपुरा धानामुष्टिमुचे कुचेलमुनये धत्तेस्म वित्तेश

ताम् ॥ ४ ॥ शरीरपतनावधि प्रभुनिषेवणा
पादनादबिंधनधनंजयप्रशमदंधनं दंधनम् ॥
धनंजयविवर्द्धनं धनमुदूढगोवर्धनं सुसाधन
मबाधनं सुमनसां समाराधनम् ॥ ५॥ इति
श्रीसर्वतंत्रस्वतंत्रवेदांतदेशिकाचार्यकृतं वै
राग्यपंचकंसम्पूर्णम् ॥ ३६ ॥ ॥ ॥

## अच्युताष्टकम्

अच्युतं केशवं रामनारायणं कृष्णदामोदरं
वासुदेवं भजे ॥ श्रीधरं माधवं गोपिकावल्लभं
जानकीनायकंरामचंद्रंहरिम् ॥ १ ॥अच्युतं
केशवं सत्यभामाधवं माधवंश्रीधरंराधिकारा
धनं॥इंदिरामंदिरं चेतसा सुंदरं देवकीनंदनं
नंदजंसंदधे ॥२ ॥ विष्णवेजिष्णवेशंखिनेच
क्रिणे रुक्मिणीरागिणे जानकीजानये ॥ वल्ल

वीवल्लभायाजितायात्मने कंसविध्वंसिनेवं शिनेतेनमः॥ ३। कृष्णगोविंदहेरामनारायण श्रीपतेवासुदेवार्चितश्रीनिधे॥ अच्युतानंतहे माधवाधोक्षज द्वारकानायकद्रौपदीरक्षक ४॥ राक्षसक्षोभितः सीतया शोभितो दंडकारण्य भुक् पुण्यताकारणम् ॥ लक्ष्मणेनान्वितो वानरैःसेवितोऽगस्तिना पूजितो राघवः पातु माम् ॥५॥ धेनुकारिष्टकानिष्टकृद्द्वेषिणाङ्के शिहाकंसहृद्वंशिकावादकः॥पूतनाशोषकःसू रजाखेलनो बालगोपालकःपातुमांसर्वदा ॥ ॥ ६ ॥ वैद्युतद्योतकासंस्फुरद्वाससा प्रावृडं भोदवत्प्रोल्लसद्विग्रहं ॥ वैजयंतीप्रभाशोभि तोरस्थलं लोहितांघ्रिद्वयंवारिजाक्षंभजे ॥७ कुंचितैः कुंतलैर्भ्राजमानाननं रत्नमौलिंल सत्कुंडलंगंडयोः ॥ हारकेयूरिणंकिंकिणी

जाज्वलं किंकिणीमंजुलंश्यामलंभावये ॥८
अच्युताष्टकंयःपठेत्प्रत्यहं प्रेमतः प्रत्यहंस
र्वतः सन्नहम् ॥सर्वतः सुंदरं कर्तृविश्वंभरस्त
स्य वश्योहरिर्जायतेसत्वरम्॥९॥ इतिश्रीम
दच्युताष्टकंसंपूर्णम् ॥ ॥श्रीरस्तु॥ ३७

अयं स्तोत्ररत्नावलीप्रथमभागः श्रीकृष्णदासात्मज खेम
राज इत्यनेन मोहमय्यां स्वीये श्रीवेंकटेश्वराख्यमुद्रायंत्रा
लये मुद्रितः शाके १८१४ विक्रमार्कातीतसंवत् १९४९

# सूचीपत्रम्

## स्तोत्ररत्नावल्या द्वितीयभागस्थ-

## स्तोत्राणांनामानि

## स्तोत्ररत्नावल्यास्तृतीयभागस्थ-

## स्तोत्राणांनामानि

## एवं मदंकितबृहत्स्तोत्ररत्नाकरे कानि कानिस्तोत्राणिसंतीतिसर्वान् ज्ञापयितुं तत्तन्नामानि लिख्यंते

---

ठिकाना—

७४॥ खेमराज श्रीकृष्णदास बजाज जोग

श्रीवेंकटेश्वर छापखाना ( मुंबई. )

